अन्यसाधनमिति नत्वज्ञानादेः केवलंसाधनमेवनतु परमफलरूपमपीति पूर्वश्लोकस्थनत्वज्ञानसाधनत्वोक्त्यासिध्यंतीकरणमनुचितमित्यर्थः सा
धनांतरवन्मोक्षकाले हेयत्वापत्तावक्ष्यमाणश्रुतिभाष्याभ्यां शुकसनकाद्याचारैश्चविरोधापत्तेरितिभावः मन्वानः पर्यालोचयमानः श्रुतिगणोभ
क्तिंगुरूकरोतिमोक्षोपरिविराजमानपंचमपुरुषार्थरूपत्वंस्थापयतीत्यर्थः भक्तिरन्यसाधनमितिपाठेअन्यस्यनत्वज्ञानमात्रस्यसाधनमेवेतिवचन

भक्तिरन्यसाधनमितिवचनमनुचितमितिमन्वानो भक्तिंगुरूकरोतिदुरवगमेति भोईश्वर दुरवगमं दुर्बोधं यदात्मतत्वं तस्यनिगमाय
ज्ञापनाय तनवान् तनोराविष्कृतमूर्तेश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः चरितमेवमहामृताब्धिः तस्मिन्परिवर्तोविगाहः
तेनपरिश्रमणाः परिवर्जनार्थः श्रमणंश्रमः गतश्रमाइत्यर्थः अपवर्गमपिकेचिन्नपरिलषंतिनेच्छंतिकुतोन्यदिंद्रपदादिकेचिदिति -
एवंभूताभक्तिरसिकाविरलाइतिदर्शयति नकेवलमन्यन्नेच्छंतिकिंतु तेनैवस्वरूपेणपूर्णाः संतः पूर्वसिद्धंगृहादिकमप -
प्युपेक्षंत इत्याह नवचरणसरोजहंसकुलसंगविसृष्टगृहा इति नवचरणसरोजे हंसाइवरममाणायेभक्तास्ते -

**दुरवगमात्मतत्वनिगमायतवात्ततनोश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः नपरिलषंतिकेचिदप**
**वर्गमपीश्वरतेचरणसरोजहंसकुलसंगविसृष्टगृहाः २१ ७ ७ ७**

षांकुलंतेनसंगस्तेनविसृष्टागृहायैस्तेतथा अनेनश्रवणकीर्तनेदर्शिते श्रुतिश्चमुक्तेरप्याधिक्यंभक्तेर्दर्शयति यथाह यंसर्वेदेवानमंति
मुमुक्षवोब्रह्मवादिनश्चेति व्याख्यातंच सर्वज्ञैर्भाष्यकृद्भिः मुक्ता अपि लीलयाविग्रहं कृत्वाभजंत इति २१ त्वत्कथा —
मृतपाथोधौविहरंतोमहामुदः कुर्वंतिकृतिनः केचिच्चतुर्वर्गंतृणोपमम् ८

स्यानौचित्यंमत्वागुरूकरोतिधर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयस्यापिसाधनत्वंमोक्षाधिकपंचमपुरुषार्थरूपत्वंचस्थापयतीत्यर्थः महान
मृताब्धिरिति यदिकश्चिदमृताब्धिर्महांस्यात्तदोपमीयेतेत्यर्थः श्लेषेणामृतानांसायुज्यादिमोक्षाणांसमुद्रतुल्ये इंद्रपदादीनि इंद्रपदशब्देन
अर्थकामौ आदिपदाद्धर्मः तथाचचतुर्वर्गमपिभक्तिवशादेवलाभमपिनेच्छंति अनेनभक्तेः पुरुषार्थचतुष्टयसाधनत्वंस्वतःपरमफलरू
पत्वंचव्यंजितं श्रवणकीर्तनेइति स्मरणपादसेवनार्चनादीनामुपलक्षणमेतदितिभावः श्रुतिश्चेति नृसिंहतापिनीश्रुतिरित्यर्थः देवाविष
यिणः ब्रह्मवादिनोमुक्ताः इतिविषयीमुमुक्षुमुक्तसेव्यत्वंनतु ब्रह्मवादिपदंवेदपाठकवाचकंनमुक्तपरमित्याशंकायामाह आख्यातंचेति

सर्वज्ञैर्भक्तिमाहात्म्यमपि श्रुतिर्निविद्वद्नुभवसिद्धं जानद्भिर्भाष्यकृद्भिः श्रीमच्छंकराचार्यैः भाष्यार्थस्तु मुक्तानपि लीलया विग्रहं कृत्वा भजंत इति श्रुतिस्थचकारार्थः अपि
नामभक्तिसाध्यफलापेक्षाशून्या अपीति सूचितं लीलयाभजंतीनिस्वभावात्प्रयोजनमनुद्दिश्यनमंदोपिप्रवर्ततइतिविरोधोनिरस्तः विग्रहंकृत्वेतिभ
गवनश्चतुर्भुजपीतांबरधारिमूर्तिमंतमर्मनोमयीवहिर्याधलोसमयीं कृत्वेतिसाकारभजनमुक्तं नमंतंतिवर्तमानप्रत्ययेनस्वभावव्यंजनाद्भक्तेरसा
धारणज्ञानिचिन्हत्वंध्वनितं यद्वालीलयाहेतुनानन्वस्थजीववत्कर्महेतुनाविग्रहंकृत्वास्वयमेवदेहंधृत्वासायुज्यादिमुक्तिमनादृत्यभजंतीति
अत्रपक्षे अकर्मजन्यलीलाविग्रहधारीमुक्तेषुभजनोन्नत्याकर्मजन्यदेहधारिजीवन्मुक्तेषुकैमुतिकसिद्धाभक्तिरिति श्रुतौनमंतीतिपदं नवविध
भजनोपलक्षणपरमित्याशयेनभाष्येभजंतीतिव्याख्यानं अत्रकौस्तुभकर्तृपितामहैरनंतदेवैः कृतेभक्तिनिर्णयग्रंथेनत्तुमुक्ताभजंतीत्य
त्रमुक्तपदेनज्ञानिनोचनव्याधिदेहकैवल्येकीर्तनायोगात् तेषांचनकिंचित्कर्तव्यंनैवतस्यकृतेनार्थइत्यादिवचनादित्याशंक्यविस्तरेणसमाहितं
अयंतत्रसमाधानाशयः नैवतस्यकृतेनार्थइत्यादिवाक्यमदृष्टार्थकर्मविषयं दृष्टार्थेषुभोजनादिषुज्ञानिनोपिप्रवर्तनेनएव कीर्तनादिकंचदृष्टार्थं
मदृष्टार्थंचकीर्तनादिभक्तिपराणांरोमांचादिसुखातिशयलिंगेनविश्रांतिहेतुत्वनिश्चयात् ब्रह्मानुभवसुखातिशायिसुखस्यात्मारामाश्चमुनयइत्या
दिवचनोक्तविद्वदनुभवसिद्धत्वाच्च ततश्चज्ञानिनांसंकीर्तनजन्यादृष्टापेक्षाभावेपिकीर्तनादिसुखातिशयार्थमेवतत्रप्रवृत्तिः अतएवमुक्त-
मंडलीमूर्धन्यस्यशुकयोगींद्रस्यभागवतसंकीर्तनायपरीक्षिन्निकटेगमनं यद्वाचतुर्विधाभजंतेमामितिगीतावाक्यमार्तादीनामिवज्ञानिनोपिभ
जनविधायकं अपूर्वार्थत्वेनभजेयुरितिविधिस्वीकारात् अधस्तात्समिधंधारयन्ननुद्रवेदुपरिहदेवेभ्योधारयतीत्यत्रोपरिधारणविधिवत्
अन्यथाआर्तादिषुविधित्वंज्ञानिष्वनुवादत्वमितिवैरूप्यापातात् नचनैवतस्यकृतेनार्थइत्यादिविरोधइतिवाच्यं तस्यज्ञानिस्तुतिमात्रपरत्वा
दिति अत्रविधेः फलंतुयावज्जीवंत्रयोवंद्यावेदांतोगुरुरीश्वरः आदौज्ञानाप्तयेपश्चात्कृतघ्नत्वनिवृत्तयइत्यादिवचनोक्तकृतघ्नत्वादिदो
षपरिहारएव अथवापतंत्यधोनादृतयुष्मदंघ्रयइत्युक्तेरभजनरूपानादरकृतपातनाभावः फलं श्रीमधुसूदनस्वामिचरणास्तुगीताटीका
दौभूमिकाःसंपादयामासुः निष्कामकर्मानुष्ठानंत्यागात्काम्यनिषिद्धयोः तत्रापिपरमोधर्मोजपस्तुत्यादिकंहरेः १ ततःपापक्षयः २ ततोनित्या
नित्यवस्तुविवेकः ३ ततइहामुत्रार्थवैराग्यं ४ ततःशमदमादिसंपत् ५ ततोदृढमुमुक्षा ६ ततोगुरूपसत्तिः ७ ततोमहावाक्योप
देशः ८ ततश्श्रवणं ९ मननं १० निदिध्यासनंच ११ ततोब्रह्मसाक्षात्कारः १२ तस्मादज्ञाननाशाद्भ्रमसंशयनाशः प्रारब्धकर्मनाश
क्रियमाणाश्लेषश्च १३ ततोवासनाक्षयार्थयमादिपंचकस्यधारणाध्यानसमाधीनांचानुष्ठानं १४ ततोवासनाक्षयमनोनाशौ १५ ए
वंवासनाक्षयमनोनाशतत्वज्ञानदार्ढ्येजीवन्मुक्तिदार्ढ्यं १६ सोयंजीवन्मुक्तस्त्रिविधः स्वतोव्युत्थानपुनर्निर्विकल्पसमाधिमान् १७

परतोव्युत्थानयुततद्भूम् १८ सर्वथाव्युत्थानरहितत्वद्वाश्चेति १९ एकोनविंशतिरभूमयोज्ञानसिद्धिदाः यस्य देवे परा भक्तिरित्यादिश्रु
तिमाननः सर्वावस्थासु भगवद्भक्तिरत्रोपयुज्यते पूर्वपूर्वभूमौ कृताभक्तिरुत्तरांभूमिमानयेत् अन्यथाविघ्नबाहुल्यात्फलसिद्धिः सुदुर्लभा
एवंप्रागभूमिसिद्धावप्युत्तरोत्तरभूमये विधेयाभगवद्भक्तिस्तांविनासानसिध्यति जीवन्मुक्तिदशायांतुनभक्तेः फलकल्पना अद्वेष्टृत्वा
दिवत्तस्यस्वभावोभजनंहरेः आत्मारामाश्चमुनयोनिर्ग्रन्थाअप्युरुक्रमे कुर्वन्त्यहैतुकींभक्तिमित्थंभूतगुणोहरिरिति अयमत्राशयः अ
द्वेष्टासर्वभूतानांमैत्रः करुणएवचेत्येवमादिगुणाःसाधकतादशायांसाधनरूपेणवर्तमानाजीवन्मुक्तिदशायांलक्षणरूपेणानुवर्तन्त
इतितुनिर्विवादं उत्पन्नात्मावबोधस्यत्वद्वेष्टृत्वादयोगुणाः अयत्नतोभवंत्यस्यनतुसाधनरूपिणइत्यादिवचनात् उक्तगीतावचना
च्च साधकतादशायांमहताप्रयत्नेनविद्यमानानामद्वेष्टृत्व मैत्रीकरुणादीनांसिद्धदशायांविनाप्रयत्नंसत्त्वेचेत्थमुपपत्तिः देहेंद्रियांतःकर
णजन्यकर्मणामस्तिशक्तिद्वयं एकंसंस्कारजनकत्वमपरमपूर्वजनकत्वंचेतिसप्रसिद्धं संस्कारमात्रजनकत्वंचलौकिककर्मस्वपिप्र
सिद्धं यथावेष्टनादिक्रिययाकटादौस्थितिस्थापकादिसंस्कारोत्पत्तिः तथाचसाधकतादशायांप्रयत्नतोनुष्ठीयमानानिशांतिदांतितितिक्षा
मैत्रीकरुणादीनिदृष्टादृष्टोपकारद्वारातत्त्वसाक्षात्कारंजीवन्मुक्तिदशांचोत्पाद्यदेहेंद्रियांतःकरणेषुकंचनसंस्कारमा जनयन्ति तत्सं
स्कारवशाच्चप्रयत्नमंतरेणाप्यद्वेष्टृत्व मैत्र्यादीनिजीवन्मुक्तेष्वनुवर्तन्ते एवंचश्रवणंकीर्तनंविष्णोःस्मरणंपादसेवनं अर्चनंवंदनंदा
स्यमित्येवंप्रकाराद्भगवद्भक्तिरपिस्वभावतोलक्षणरूपेणजीवन्मुक्तेष्वनुवर्तनइत्यवश्यमभ्युपेयं भगवद्भक्तिर्हिनिष्कामकर्मानु-
ष्ठानमारभ्योक्तसर्वभूमिकासुजीवन्मुक्तिदशाप्राप्तिपर्यंतासु अनुष्ठीयमानास्त्ववश्यं अनुष्ठीयते तांविनाज्ञानोदयादिभूमिप्राप्त्यभा
वादित्युक्तंश्रेयःसृतिंभक्तिमुदस्यतेविभोइत्यादिपरश्शतश्रीभागवतादिपुराणवचनेभ्यः यथाज्ञानंविनामुक्तिर्नास्त्युपायशतैरपि त-
थाभक्तिंविनाज्ञानंनास्त्युपायशतैरपीत्यभियुक्तोक्तेश्चएवंचमूलादारभ्यपरतोव्युत्थानपर्यंतभूमिकास्वनवरतमनुष्ठीयमानाभक्तिर्भ
गवत्प्रसादद्वारातांतांभूमिकामुत्पाद्यसिद्धदशायामपिलक्षणरूपेणवर्ततइतियुक्तं किंचाद्वेष्टृत्वादितोपिभक्त्यनुवृत्तिरवश्यंभाविनी
अद्वेष्टृत्वादीनांश्रवणमननाद्यारभ्यानुष्ठीयमानत्वात् भक्तेस्तुततोपिपूर्वंनिष्कामकर्मानुष्ठानमारभ्यानुष्ठीयमानत्वेनतत्संस्कार
स्यततोपिदृढतरत्वात् अतएवचाद्वेष्टृत्वादितोपिभक्तेरसाधारणज्ञानिचिह्नत्वं एवंचयथाद्वेष्टृत्वादिचिह्नाभावेज्ञानित्वएवसंदेह
स्तथावश्यानुवर्तमानश्रवणकीर्तनादिभगवद्भक्तिरूपासाधारणचिह्नाभावेज्ञानित्वाभावएवेतिशुकाग्रहइत्यन्यत्तद्यैर्विभावनीयं इ
दंस्वभावतोभक्त्यनुवृत्तिप्रतिपादनंव्युत्थानराहित्यलक्षणायांचरमभूमिकायामेव पूर्वासुव्युत्थानवत्सुभूमिकासुतत्तत्तरभूमिप्राप्त्यर्थं

कीर्तनादिसुखातिशयार्थंच प्रयत्नत एव भक्त्यनुष्ठानं कुर्वंत्यहैतुकीमित्यादौ कृपानुनाम्प्रयत्नो क्तेरिति अत्रार्थेस्तुतसंहिता वचनानि विशुद्धज्ञानमुत्य न्नंपश्यंतस्यमहात्मनः शिवरुद्रमहादेवब्रह्मेशानादिनामसु शिवस्यलिंगपूजायांशिवस्थानेषु सुप्रनाः प्रियबुद्धिः प्रजायेत स्वभावादेवसर्वदा यस्यविज्ञा निनस्तेषु प्रद्वेषो वापिजायते उपेक्षावानसज्ञानी पशुर्विज्ञानवंचकः बाधितो कारनो वापियस्यबुद्धिः स्वतोनहि एषसौ नैवविज्ञानी भ्रांतएवन संशय इ त्यादीत्यलमतिविस्तरैः ८ कर्माचरणविरागो भूमी अपियेनसम्यगारूढाः महंतिवयं ज्ञानिन ईशनमत्रामनतितनिस्नेभ्यः २१ आराममिति

आराममस्यपश्यंतितनंपश्यतिकश्चन ननंविदाथयइमाजजानान्यद्युष्माकमंतरंबभूव नीहारेणप्रावृताजल्प्याचासुतृपउक्थशासश्च रंतीत्याद्याः श्रुतयोनुक्रोशांसोजगदात्मनीश्वरेरतिमुपदिशंतीत्याह त्वदनुपथमिति त्वदनुवर्तित्वात्त्वत्सेवौपयिकमिदंकुलायंकोपृथिव्यां लीयतइतिकुलायंशरीरम् आत्मसुहृत्प्रियवत् आत्मावसुहृच्चप्रियश्चतद्वत् चरतिस्वाधिनतयावर्ततइत्यर्थः तथापित्वयिउन्मुखेहि

त्वदनुपथंकुलायमिदमात्मसुहृत्प्रियवच्चरतितथोन्मुखेत्वयिहितेप्रियआत्मनिच
नवतरमंत्यहोअसदुपासनयात्महनोयदनुशयाभ्रमंत्युरुभयेकुशरीरभृतः २२

तेप्रियेआत्मनिच अप्यर्थेचकारः एवंभूतेसत्यपि त्वयिनत्अहोकष्टं नरमंतिनसख्यादिनाभजंति असदुपासनयादेहाद्युपलाल नेन आत्महनः प्रमादिनः कुतः यदनुशयाः यस्यामसदुपासनायामनुशयोवासनायेषां तेकुशरीरभृतः संतःउरुभयेसंसारेभ्रमंति परिवर्तंते अत आत्महनइतिभावः त्वय्यात्मनिजगन्नाथेमन्मनोरमतामिह कदाममेदृशंजन्ममानुषंसंभविष्यति २२ ९

अस्यपरमात्मनःआरामंउपवनं क्रीडास्थानंग्रामनगरादिविश्वंसर्वेपश्यंति तंआरामनिर्मातारंपरमात्मानं कश्चनकोपिनपश्यति नत मिति यूयंतंनविदाथनजानीथ यइमाःप्रजाजजानजनयतिस्म अतोयुष्माकंतस्यच अन्यद्भेदमहदंतरंबभूव यतोभवंतोनीहा रेणाविद्ययाप्रावृता अवगुंठिताः जल्प्याःप्रजल्पनपराःतार्किकाइत्यर्थः अतएवासुतृपः प्राणतर्पणपरायणाः उक्थानांशासितारः पश्वालस्येचरंतिसंसरंतीत्यर्थः अनुक्रोशांत्य.कृपयोच्चैरुपदिशंत्यः रमंतीतिपरस्मैपदमार्षं ९

आत्मावाअरेइति वैनिश्चयेअरेमैत्रेयि आत्माद्रष्टव्यः साक्षात्कर्त्तव्यः अन्यज्ञानेविध्यसंभवात् द्रष्टव्यइत्यनूद्यश्रवणादिसाधनानिविधीयंते आत्म दर्शनफलायश्रवणादिकंर्त्तव्यमिति तानिसाधनान्याह श्रोतव्यइति उपक्रमादितात्पर्यलिंगविचारैरवधारयितव्यः मंतव्यः अनुकूलतर्कैरसंभावना विपरीतभावनानिवृत्तयेस्वयंमुहुर्विचारणीयः निदिध्यासितव्यः निश्चयेनध्यातव्यः अ त्रात्मपदंसाकारनिराकारब्रह्मसाधारणमितिटीकाशयः नेनारीणांनारिणांचसाकारध्यानमहिमप्रदर्शनपरमूलेनैकवाक्यता चरणस्मरणंप्रेम्णातवदेवसुदुर्लभमितितात्पर्यसंग्राहकसाकारविषयकश्लो

इदानीमात्मावारेद्रष्टव्यः श्रोतव्योमंतव्योनिदिध्यासितव्यइत्याद्याः श्रुतयोध्यानमंगलेनोपदिशंतीत्याह निभृतमरुन्मनोक्षदृढयोगयुजइति मरुत्प्राणः मनश्च अक्षाणींद्रियाणिचनिभृतानिसंयमितानियैस्तेचतेदृढंयोगंयुंजंतितेदृढयोगयुजस्तेतथाभूतामुनयोहृदियत्तत्वमुपास तेतदेवारयोऽपितवस्मरणाद्ययुः प्रापुः स्त्रियोऽपिकामतःउरगेंद्रभोगभुजदंडविषक्तधियः अहींद्रदेहसदृशयोर्भुजदंडयोर्विषक्ताधीर्या सांताःपरिच्छिन्नदृष्टयःसमदृशःसममपरिच्छिन्नंत्वांपश्यंत्यो

निभृतमरुन्मनोक्षदृढयोगयुजोहृदियन्मुनयउपासतेतदरयोऽपिययुःस्मरणात् स्त्रियउरगेंद्रभोगभुजदंड विषक्तधियोवयमपितेसमाःसमदृशोऽंघ्रिसरोजसुधाः २३ ७ ८ ८

वयंश्रुत्यभिमानिन्योदेवताअपितेसमाएवकृपाविषयतयाअंघ्रिसरोजसुधाः अंघ्रिसरोजंसुष्ठुधारयंत्यः अयंभावः इत्थंभूतस्तवस्म रणानुभावः येयोगिनस्त्वांदृढयालंबनमुपासते याश्चवयंत्वांसमंपश्यामः याश्चस्त्रियः कामतः परिच्छिन्नंध्यायंति येचद्वेषेणसर्वा नपितांस्त्वामेवप्रापयतीति २२ चरणस्मरणंप्रेम्णातवदेवसुदुर्लभं यथाकथंचिन्नृहरेममभूयादहर्निशं २२ १०

कसंगतिश्चस्पष्टा ध्यानमंगलेनेति साकारध्यानमपिध्यातृकामनानुसारेण साकारस्यनिराकारस्यवाब्रह्मणोदर्शनसाधनत्वेनोपदिशंतीत्यर्थः मुन योहृदियत्तत्वमिति मौनेयानिदिध्यासेत्यादिश्रुत्युक्तमननशीलत्वात्परिच्छिन्नदृष्टयोयद्ब्रह्माख्यतत्वरूपंत्वामुपासतेतदेवारयोऽपिसाकारस्यतव स्मरणप्रभावाद्ययुरित्यर्थः उपासतेययुरितिवर्तमानभूतप्रत्ययाभ्यांमुनयउपासीनाएववर्त्तंतेतेषांतत्प्राप्तिः पूर्वमेवारयस्तद्यापुरितिव्य ज्यते एकमाश्चर्यमुक्ताश्चर्यांतरमाह स्त्रियइति स्त्रियोपीत्यपिशब्दाद्धृयतं कृपाविषयतयासमाजाताइतिशेषः अंघ्रिसरोजमिति चरणधारणात्याम पिश्रुतीनामपरिच्छिन्नत्वासंधानमितिभावः १० २२

ननु यत्स्मरणानुभावएवंभूतः कीदृशंतद्भगवत्तत्वमित्याकांक्षायांतस्यदुर्ज्ञेयत्वादलंजिज्ञासयाभक्तिरेवश्रेयसीत्याशयेनावतारयति यतोवाचइत्यादि
यस्मान्निर्विकल्पाद्वयानंदात्सत्तोवाचोभिधायकशब्दास्ताद्दशब्रह्मबोधनायप्रयुज्यमानाअपि अप्राप्यशक्तित्वात्अप्रकाश्यैवनिवर्त्तंते मनसासह
हेति मनोवृत्तिरपि ततप्रकाशयतीत्यर्थः कोअद्धेति इयंविसृष्टिराकाशादिसृष्टिः कुतः कस्माज्जाता कुतः कस्माद्धेतोः स्थितिंप्राप्ताएतद्द्वाप्रत्यक्ष
यतोवाचोनिवर्त्तंतेअप्राप्यमनसासहकोअद्धावेदकइहप्रवोचत् कुतआजाताकुतइयंविसृष्टिः अर्वाग्देवाअस्यविसर्जनेनाथाकोवेदयतआबभूव
अनेजदेकंमनसोजवीयोनैनद्देवाआप्नुवन् पूर्वमर्शत् तद्धावतोन्यानत्येतितिष्ठत्तस्मिन्नपोमातरिश्वादधातीत्याद्याः श्रुतयोभगवत्तत्वंदुर्ज्ञेयंवदं
त्योभक्तिमेवोररीकृत्यस्तुवंतीत्याह कइहन्विति बत अहोभगवन् इहजगति अग्रसरंपूर्वसिद्धंत्वां अवरजन्मलयः अर्वाचीनोसन्निनाशवान्
कोनुपुमान्वेदजानाति ईश्वरस्यपूर्वसिद्धावन्यस्यचार्वाचीनत्वेप्रमाणंवदन् ज्ञानकारणाभावमाह यतउदगादिति यतस्त्वत्तः ऋषिर्ब्रह्मा
उत्पन्नः यंब्रह्माणमनुउभये अध्यात्मिकाधिदैविकादेवगणाउत्पन्नाः ततोप्यर्वाचीनाः सर्वेयदातुभगवान्सर्वमवरूध्यउपसंहृत्यशायी-

**कइहनुवेदबतावरजन्मलयोग्रसरंयतउदगादृषिर्यमनुदेवगणाउभये तर्हिनसन्नचासदुभयंनच कालजवः किमपिनतत्रशास्त्रमवकृष्यशयीतयदा २४ ६७ ६७ ६७**

नतर्हितदाअनुशायिनांजीवानांसाधनंनास्तियतस्तदानसत् स्थूलमाकाशादिनचासत् सूक्ष्मंमहदादिनचउभयंसदसद्भ्यामारब्धंशरीरम्
नचकालजवः तन्निमित्तभूतंकालवैषम्यम् एवंसतितत्रतदानकिमपिइंद्रियप्राणाद्यपि नचज्ञापकंशास्त्रमपि अयमभिप्रायः अर्वाक्कृद
ष्टिगतानांदेहाद्युपाधिकृतांनराणांकालवशेनचमलिनसत्वानांनतावद्भगवज्ज्ञानसामर्थ्यंतथाचश्रुतिः ननंविदाथयइमाजजानान्य-
द्युष्माकमंतरंबभूवइत्याद्याः यदातुप्रलयसमयेनबद्धंनरमस्तितदा १ पिसाधनाभावात्नभगवज्ज्ञानसामर्थ्यम् अतस्त्वदेकशरण
तयाश्रवणकीर्तनादिभक्तिरेवसकरोति २४ क्वाहंबुध्यादिसंरुद्धः क्वचभूमन्महस्तव दीनबंधोदयासिंधोभक्तिंमेनृहरेदिश ११

नः कोवेदनकोपीत्यर्थः इहसंसारमंडलेकःप्रवोचत्प्रावोचत् कोपिप्रवक्तानबभूवेत्यर्थः ननुब्रह्मादिदेवाज्ञास्यंतितत्राह अर्वागिति अस्यवि
सर्जनेनएतत्सृष्टत्वेनब्रह्मादिदेवाअपिअर्वाचीनाएवेत्यर्थः योब्रह्माणंविदधातिपूर्वमितिश्रुतेः अथतस्मादियंविसृष्टिर्यतआबभूव तंकोवेदन
कोपीत्यर्थः अनिर्वचनीयैवसृष्टिरितिभावः अनेजदिति एकमद्वितीयंएजनंकंपनंस्वस्थानात्च्यवनंतद्रहितमपिमनसोजवीयोवेगवत्तरंविभुत्वादित्य
र्थः एनत् आत्मतत्वंदेवाइंद्रियाणिनाप्नुवन् यतः पूर्वमर्शत् पूर्वमेवगतंसर्वांतरतयास्थितंननुपराग्भूतमित्यर्थः इंद्रियाणि पराग्वस्तुविषयाणितत्र

स्वविषयाणीतिभावः तिष्ठत्स्थिरमपिनन् शीघ्रगतिमनो न्यानस्येति अतिक्रम्यवर्तते तस्मिन्परमात्मचैतन्येसतितदाश्रयत्वेनवर्तमानो मातरि-
श्वावायुः अपःउदकप्रवाहवत् सततंवर्तमानाः सर्वेषांसर्वचेष्टाद्धातिसंपादयति ततंविदार्थेति व्याख्याता ११ २४
असतः उत्पत्तेः प्रागविद्यमानस्यजगतः वैशेषिकाः काणादाः सप्तपदार्थवादिनोनवीनास्तार्किकाः एतेह्येवमाहुः उत्पत्तेः पूर्वंकार्यमात्रस्यप्रागभावो
स्तिसचतत्तत्प्रागभावस्तत्तत्कार्येनिमित्तकारणं उत्पन्नेकार्येप्रागभावनाशः तस्यानादित्वेसतिसांतत्वादिति सांख्यवेदांतिनौतुसत्कार्यवादिनौ उ
त्पत्तेः पूर्वंकारणेसूक्ष्मरूपेणसदेवकार्यंकुलालादिकारकव्यापारेणव्यक्तीक्रियते प्रागभावस्यतुनकारणता अभावाद्भावोत्पत्तेरसंभवात् नास
तोविद्यतेभावइत्यादिवचनादितितयोराशयः पातंजलायोगशास्त्रप्रणेतारः जीवरूपंसत्यंनत्वौपाधिकं यथाताम्रादिरसुवर्णरूपएवसन्नौ
षधिपुटपाकादिप्रभावात्सुवर्णंभवति एवमब्रह्मभूतोजीवोयोगप्रभावाद्ब्रह्मभवतीतियोगशास्त्राशयः वेदांतिनस्तुजीवः सर्वदाब्रह्मरूपए
वास्ति अज्ञानेनस्वस्याब्रह्मरूपत्वंमत्वा संसरति यथाकश्चनराजपुत्रः राज्ञावनेत्यक्तोव्याधैः संवर्धितोव्याधएवाहमितिराजत्वाज्ञानान्मन्य

इतो ऽपिज्ञानं नसुशकमुपदिशतामपिभ्रमबाहुल्यादित्याहुः जनिमसतइति असतोजगतोजनिमुत्पत्तिंयेवैशेषिकादयोवदंति असतएव
ब्रह्मत्वस्योत्पत्तिंयेचपातंजलादयः सतएवैकविंशतिप्रकारस्यदुःखस्यनाशंमोक्षंवदंतियेनैय्यायिकाः ७. ७.

तेस्म सच केनचित्तत्वंव्याधः किंत्वमुकराष्ट्राधिपोराजात्वमसीत्यादिनोपदिष्टोज्ञानस्तत्व्याधत्वंविहायराजत्वंज्ञात्वाराजाभवतितद्वदितिवदंति
एकविंशतिप्रकारस्येति षडिंद्रियाणिषड्विषयाःषडिंद्रियजन्यज्ञानषट्कंशरीरंसुखंदुःखंचेत्येकविंशतिविधंदुःखं वैषयिकसुखस्यापिनाशादिज्ञाने
नदुःखसंबंधित्वात्दुःखत्वं एवंशरीरेंद्रियादीनामपिदुःखनिदानत्वादिनादुःखत्वं एवमेतस्यैकविंशतिविधदुःखस्यसत्यस्यैवज्ञानान्नाशोमोक्षः तथा
चगौतमसूत्रं दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापायेतदनंतरापायादपवर्गइति उत्तरोत्तरापायेमिथ्याज्ञानादिनाशेतदनंतरस्यत
त्पूर्वपूर्वस्यदोषादेरभावान्मुक्तिरितिसूत्रार्थः तथाचायंक्रमः सर्वपदार्थतत्वज्ञानेसर्वपदार्थविविक्तात्मतत्वज्ञानान्मिथ्याज्ञाननाशः तेनदोषा
णांरागादीनांनाशः प्रवृत्तिहेतुरागाद्यभावेप्रवृत्तेर्धर्मादिरूपाया अनुत्पत्तिः तदनुत्पादेचदेहांतरसंबंधरूपजन्माभावः भोगेनप्रारब्धक्षयः
ज्ञानेनसंचितक्षयः एवंभाविजन्माभावेवर्तमानदेहपातेएकविंशतिदुःखध्वंसोमोक्षः मोक्षस्यदुःखाभावरूपत्वेनैवपुरुषार्थत्वंनतुसुखरूप
त्वेनापिनित्यसुखाभावादितिप्राचीनतार्किकाः षोडशपदार्थवादिनोवदंतीत्यर्थः अद्वैतवादिनस्तुज्ञानेकनिवर्त्यस्यद्वापिसत्यत्वादर्शनान्मा

न्यः पंथाविद्यतेऽयनायेत्यादिश्रुतौ ज्ञानैकनिवर्त्यत्वेनश्रुतएकविंशानिदुःखात्मासंसारोनसत्यः किंतुरज्जुसर्पादिवन्मिथ्यैवेतिकल्पितस्यैवदुःखात्मकसंसारस्य ज्ञानान्नाशोमोक्षइतिसिद्धांतयंति सांख्यादयइति आदिपदमर्हतवादिभिन्नसर्वशास्त्रकारसंग्रहार्थं वास्तविकात्मनानात्वस्यसर्वमतेसत्वात् अर्हतमते वस्तुतएकएवात्माजीवात्मपरमात्मभेदजीवजीवभेदादिकंचोपाधिकल्पितंघटाकाशमठाकाशादिभेदइवाकाशइति सत्यमिति नित्यमित्यर्थः ध्वंसाप्रतियोगीतियावत् अक्षय्यंहवैचातुर्मास्ययाजिनःसुकृतंभवतीत्यादिश्रुतिबलेनस्वर्गादेः कर्मफलस्यनाशानंगीकारात् सृष्टिप्रलयानंगीकाराच्च एतेषांमीमांसकानांमतेदुःखप्रागभावपरिपालनंमोक्षः यज्ञाद्यकरणेदुःखोत्पत्त्यादुःखप्रागभावनाशोबंधः यज्ञादिकरणेनित्यस्वर्गोत्पत्त्यादुःखोत्पत्त्यभावेनप्रागभावपालनमिति वेदांतिमतेब्रह्मातिरिक्तस्यसर्वस्यानित्यत्वमिति एवंपंचशास्त्राणांमतान्यनूद्यषष्ठेनवेदांतशास्त्रेणापवदति तेसर्वेइत्यादिना सदेवेति

उक्तअपिचयेसांख्यादयः आत्मनिभिदांभेदंचयेमीमांसकाः विपणंकर्मफलव्यवहारमृतंसत्यंस्मरंतिवदंतितेसर्वेभारूपितेः आरोपिते भ्रमैरेवोपदिशंति ननुतदस्यासदेवसौम्येदमग्रआसीत् ब्रह्मैवसन्ब्रह्माप्येतिअनीशयाशोचतिमुह्यमानः अविद्यायामंतरेवर्तमानाः

जनिमसतःसतोमृतिमुतात्मनियेचभिदांविपणमृतंस्मरंत्युपदिशंतित आरुपितैः ७ - ७

स्वयंधीराःपंडितंमन्यमानाःजंघन्यमानाःपरियंतिमूढाः अंधेनैवनीयमानायथांधाः

इदंनामरूपात्मकंविकृतंजगत्हेसौम्य अग्रे सृष्टेःपूर्वंसदेवसद्रूपब्रह्मात्मकमेवासीत् नतुनासीदित्यसत्कार्यवादिनःकाणादस्यनिरासः ब्रह्मैवेति यआत्मानंपश्यतिसब्रह्मैवसन्ज्ञानात्पूर्वंब्रह्मरूपएवसन्ज्ञानोत्तरकालंशरीरपातोत्तरंवाब्रह्माप्येतिप्राप्नोतीतियोगशास्त्रनिरासः अनीशयेति अनीशायामायानयामुह्यमानः शोचतिदुःखीभवतीत्यज्ञानकल्पितमेवदुःखंनसत्यमितिगौतममीयमतनिरासः मीमांसकमतंपरिहरति अविद्यायामिति धीराःधीमंतोपि अविद्यायामंतरेमध्येवर्तमानाअविद्याहतज्ञानाअतोमूढाविवेकशून्याःस्वयमात्मानमेवपंडितंमन्यमानाःअतोजराजन्ममरणादिदुःखव्रातैर्जंघन्यमानाःभृशंपीड्यमानाःहंतेर्यङ् अभ्यासस्यनुक् अभ्यासाच्चेतिकुत्त्वरखंडेकुत्वं ततःकर्मलटःशानच् अतोलोपोयलोपश्चेति परियंतिपरिभ्रमंति अंधेननीयमाना अंधायथाकूपोदकपानादिक्लेशप्रापमेवप्राप्नुवंतोभ्रमंतितद्वत् आत्मभेदस्यसर्वमतसिद्धांतत्वात्तन्मतेपरिहरति

७ ७ ७ ७ ७

एकमेवेति एकपदैवकाराद्वितीयपदैः स्वगतसजातीयविजातीयभेदनिरासः तदुक्तंविद्यारण्यगुरुभिः वृक्षस्यस्वगतोभेदः पत्रपुष्पफलादिभिः वृक्षांतरात्सजातीयोविजातीयः शिलादितः तथासद्वस्तुनोभेदत्रयंप्राप्तंनिवार्यते ऐक्यावधारणाद्वैतप्रतिषेधैस्त्रिभिःक्रमादित्यादि एकएवहिभूतात्मेति अत्रापिश्रुतौएकएवहीतिपदत्रयेणभेदत्रयनिरासः भूतात्माभूततादात्म्यापन्नःसन्जरायुजादिचतुर्विधभूतजातेव्यवस्थितः विविधतया नात्वेनावस्थितः अतएकधाएकोपाध्यनुसंधानेएकधैवबहूपाध्यनुसंधानेबहुधैवचदृश्यते एवंतिदृवार्थे जलचंद्रवदिति यथाजलधिविंबितश्चंद्र एकजलेदर्शनेएकोदृश्यतेबहुजले त्वदर्शने

एकमेवाद्वितीयंब्रह्म एकएवहिभूतात्माभूतेभूतेव्यवस्थितः एकधाबहुधाचैवदृश्यतेजलचंद्रवदित्यादिश्रुतिर्विरोधात् किंचवस्तुनःपुरुषस्यत्रिगुणमयत्वंसर्वमिदंसंगच्छेत ननुतदस्तीत्याह त्रिगुणमयः पुमानितिभिदायदबोधकृतात्वयीति त्रिगुणमयःपुमानित्यनेनहेतुनायाभिदाउपलक्षणमेतत् भिदादिसायस्मात्वयिविषये अबोधकृतात्वद्विषयाज्ञानविजृंभितात

## त्रिगुणमयःपुमानितिभिदायदबोधकृतात्वयिनततःपरत्रसभवेदवबोधरसे २५ छ

हिंकिमज्ञानमस्तिवस्तुनः पुंसितत्रैवेत्याह ततः अबोधात्परत्रपरेअसंगेवबोधरसेज्ञानघनेसअबोधोनभवेत् नसंभवतीत्यर्थः २५ मिथ्यातर्कसुकर्कशेरितमहावादांधकारांतरभ्राम्यन्मंदमतेरमंदमहिमंस्त्वज्ञानवर्त्मास्फुटम् श्रीमन्माधववामनत्रिनयनश्रीशंकरश्रीपतेगोविंदेतिमुदावदन्मधुपतेमुक्तःकदास्यामहम् १२ छ छ छ

बहुधादृश्यतेनेनद्वदित्यर्थः

आदिपदात्तद्यथेहकर्मचितोलोकः क्षीयतेइतितैषातर्केणमतिरापनेयेत्यादिश्रुतिसंग्रहः श्रीमन्निति सर्वतःशोभमान माधवमधौगोचापत्येषुवतीर्ण त्रिनयनेति श्रीशंकरेतिशिवनामकीर्तनं यद्वात्रयाणांलोकानांलोचनरूपोनायकोवाश्रियालक्ष्म्यासक्तानांशंकरोतीतितयोः संबुद्धिः श्रीपतेलक्ष्मीकांत गोविंदगोकुलादौविहारशील मधुपतेमथुरायांद्वारकायांचविराजमान मुदामेव्यावदन्नुकदामुक्तःस्यांयद्वामुक्तोमुक्तपुनरकालमपिमुदामोक्षाधिकानंदेनवदन्कदास्यामिति १२ २५

छ छ छ छ छ छ छ छ

पृथक्ब्रह्माभिन्नंनास्तीत्यर्थःस्यात् तत्रपृथक्सत्वाभावेसत्वेनप्रतीतिर्विरुद्धेनेत्यर्थः असतोधीति असतोनामरूपव्याकृतिरहितत्वेनभू- न्यतुल्यात् ब्रह्मणोनिमित्तभूतात् नविद्यतेधीर्यस्मात्तदधिमूलाज्ञानं मनोमहत्तत्वास्यासमष्टिबुद्धिरसृजत अजायत अज्ञानमेवसमष्टि

नन्वेवंयद्यसन्नोत्पद्यतेयदिचत्रिगुणमयःपुरुषोनभवतितर्हीदंप्रपंचजातंपुरुषश्चपृथक्नास्तीत्युक्तंस्यात् कथंतर्हितयोःसत्वेनप्रती निरतआह सदिवमनइति मनःमनोमात्रविलसितमिदंत्रिवृत् त्रिगुणात्मकंप्रपंचजातमसदेवसदिवविभातिकथमितिचेत्तत्रा- ह त्वयीति त्वय्यधिष्ठानेअधिष्ठानसत्तयासद्रूपतयेत्यर्थः नकेवलमिदं कारास्पदंकिंतु आमनुजात् मनुजःपुरुषः अभिवि धावाकारः पुरुषमभिव्याप्येतिपुरुषस्यापिपृथक्सत्वप्रतीतिर्मनोमात्रविलसितेत्यर्थः तथाचश्रुतिः असतोधिमनोसृजत म नःप्रजापतिमसृजत प्रजापतिः प्रजाअसृजत तद्वाइदंमनस्येवपरमंप्रतिष्ठितं यदिदंकिंचेति नन्वात्मविदामपिविश्वंसदेवस्फुर

सदिवमनस्त्रिवृत्त्वयिविभात्यसदामनुजात्सदभिमृशंत्यशेषमिदमात्मनयात्मविदः नहिवि कृतिंत्यजंतिकनकस्यतदात्मनयास्वकृतमनुप्रविष्टमिदमात्मनयाऽवसितम् २६ ७

तिअतःकथमसत्स्यादतआह सदभिमृशंतीति आत्मविदस्त्वशेषमिदंभोक्तृभोग्यात्मकं विश्वमात्मनयैवसदभिमृशंतिसदि तिजानंति आत्मकार्यत्वान्नपृथगित्यर्थः तथाहि यदुपादानकंयत्कार्यंभवति तत्तेनैवरूपेणप्रतीयते उपादीयतेचेति- लोकाचारेणदर्शयति नहिविकृतिमिति कनकस्यविकृतिंकुंडलादिकंकनकार्थिनोनत्यजंति अत्रहेतुः वदात्मनयाकनक रूपत्वेनेत्यर्थः अतः स्वकृतमिदं विश्वमनुप्रविष्टंचपुरुषरूपमात्मनयैवावसितंनिश्चितम् २६ यत्सत्वतःसदाभातिजग देतदसत्स्वतः सदाभासमसत्यस्मिन्भगवंतंभजामतम् १२ ७

मनोरूपेणाविवर्तितमभूदित्यर्थः तच्चमनःप्रजापतिंसत्यलोकवासिनंब्रह्माणमसृजत तस्माद्यदिदंपरिदृश्यमानंकिंचकिंचनतदिदंमनस्ये १४ वसमष्टिबुद्धावेवपरमंयथास्यात्तथाप्रतिष्ठितंप्रकर्षेणस्थितमित्यर्थः १२ २६ ७ ७ ७

नवपरिये नेहनानेति इह ब्रह्मणि नाना सजातीयादिभेदस्तु न किंचन किमपि नास्ति वस्तुतः कल्पितमेव सर्वं भासत इत्यर्थः मृत्योरिति इह ब्रह्म-
णि यः नानेव कल्पितभेदशालित्वेन नानात्वेन नानात्मकं विश्वं पश्यति स मृत्योरनंतरं मृत्युं जन्ममरणादिपरंपरारूपसंसारं प्राप्नोतीत्यर्थः ननु ज्ञानं ब्र-
ह्मज्ञानं सुकरमेव ज्ञानमात्रान्मोक्षसिद्धेः कृतं भक्त्या अलं साकारेश्वरभजनेन मास्तु भगवद्भक्तिरित्यर्थः एवं हि वेदांततात्पर्यानभिज्ञास्तच्छा-
स्त्राभिमानिनो वदंति अज्ञानकृतः संसारो ज्ञानादेव निवर्तते न तत्र ज्ञानान्यसाधनापेक्षा न हि रज्जुज्ञानकृतसर्पनिवृत्तिर्ज्ञानातिरिक्तदंडप्रहार-
देवतार्चनादिकं साधनमपेक्षते ज्ञानं च प्रमाणाधीनमिति वेदांतश्रवणादेव ब्रह्मज्ञानं न तत्र भक्त्यपेक्षा न हि चक्षुरादेः स्वविषयज्ञानजनने भ-
क्त्यपेक्षा न चाग्निष्टोमादिवाक्यैः श्रद्धावतां स्वार्थधर्मबोधने भक्तिरपेक्ष्यते न च श्रद्धैव भक्तिरिति वाच्यं श्रद्धाभक्तिसमन्वित इत्यादौ भेदेनो-
क्तेः न च वेदांतश्रवणात्परोक्षज्ञानमेव जायते न तत्सदापरोक्ष्याय तत्र त्वपेक्षेति वाच्यं वाक्यश्रवणादेवापरोक्ष्यमिति विवरणसिद्धांतात् शब्दो

ननु सत्यं ज्ञानमनंतं ब्रह्म नेह नानास्ति किंचन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति इत्यादिश्रुतिभिरेवंभूतस्य भगवतः प्रतिपाद-
नात् तज्ज्ञानं सुकरमेवेति कृतं भक्त्या अत आह नवपरिचरंतीति न वेति कर्मणि षष्ठी त्वां ये परिचरंति छंदसि व्यवहिताश्चेति प-
च्छब्देन व्यवधानमदोषः केन रूपेण अखिलसत्त्वनिकेततया अखिलानि सत्त्वानि निकेतो यस्य स तथा तस्य भावस्तत्ता
तया सर्वभूतावासतयेत्यर्थः उत एव अविगणय्य तिरस्कृत्य निर्ऋतेर्मृत्योः शिरः मूर्धानं पदा पादेन आक्रमंति मृ-
त्योर्मूर्ध्नि पदं दधतीति ते नरांते मुच्यंत इत्यर्थः ये पुनर्विमुखाः अभक्तास्तान् गिरा वाचा पशूनिव विबुधान्विदुषोऽपि पाशिव
यसे बध्नासि कुतः त्वयि कृतसौहृदाः त्वयि कृतं सौहृदं प्रेम यैस्ते खलु निश्चितं पुनंति पवित्रयंति आत्मानमन्यानपीति
शेषः नेतरे तथा च श्रुतिः तस्य वाक्तंति नामानि दामानि तदस्येदं वाचा तंत्या नामभिर्दामभिः सर्वं सितमिति अयमभि-
प्रायः सत्यमेवंभूतमात्मानं श्रुतयः प्रतिपादयंति २ ६ ६

हि परोक्षवस्तु विषये परोक्षज्ञानं जनयति सन्निकृष्टप्रत्यक्षार्हवस्तुविषये तु प्रत्यक्षमेव ज्ञानं जनयति तथा च यत्साक्षादपरोक्षात् ब्रह्मेति प्रत्य-
गभिन्नब्रह्मणो नित्यसन्निकृष्टत्वादपरोक्षत्वाच्चापरोक्षमेव ज्ञानं महावाक्याज्जायते दशमस्त्वमसीत्यादिवाक्यवत् न हि दशमस्त्वमसीत्युक्ते त्व-
द्दशमत्वज्ञाने भक्त्याद्यपेक्षेति सर्वभूतावासतयेति खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन् सरित्समुद्रांश्च हरेः शरी-
रं यत्किंच भूतं प्रणमेदनन्य इत्याद्युक्तरीत्येति भावः इदं श्रवणकीर्तनार्चनादिरूपलक्षणं तस्य वागिति वेदरूपा वाक् तंतिर्महारज्जुः ब्राह्मणा-
दिनामानि तंतिसंयुक्तदामानीव यथा तंत्यां दामभिर्वृषा बध्यंते एवमीश्वरस्य विधिनिषेधलक्षणया वेदवाण्या तं निरूपया दामरूपैर्नामभि-

रिदं सर्वं जगत् सितं बद्धं ब्राह्मणस्त्वं षट्कर्माणि कुरु क्षत्रियादिस्त्वं यजनादित्रयं ब्रह्मचारी वेदपाठमित्येवमादिना संपन्नमित्यर्थः एवंभूतं भस्य
गाभिन्नं सज्जानीयादिभेदशून्यं प्रतिपादयंतीति सत्यमित्यन्वयः तत्रापरोक्षवस्तु विषयकप्रमाणानामपरोक्षज्ञानजनकत्वनियमं बाधाभि
प्रेनमंगीकरोति यद्यपीत्यादिना मतत्यनपेक्षां निरस्यति तथापीति शब्दस्य परोक्षज्ञानजनकत्वस्वभावात् श्रवणकाले परोक्षमेव ज्ञानं नि
दिध्यासनोत्तरमेव मनसा साक्षात्कार इति वाचस्पतिमते श्रवणोत्तरमपि साक्षात्कारार्थं निदिध्यासनाद्यपेक्षावत् सिद्धा मतत्यपेक्षाविव
रणकारमतेऽप्याह असंभावनेति अयं तत्र विवरणसिद्धांतानुसार्याशयः श्रवणकाले उत्पन्नमपि अपरोक्षज्ञानमसंभावनाद्यनंतदोषैः
प्रतिबद्धतया नाविद्यानिवर्तनादिकार्यक्षमं तद्युत्पन्नोप्यग्निर्मणिमंत्रादिभिः प्रतिबद्धो दाहादिकार्यं जनयति अतः श्रवणकालिकं ज्ञानम
परोक्षसंज्ञमपि परोक्षतुल्यमेव भवति ततश्च अविद्यानिवृत्त्यादिकार्यक्षमसाक्षात्कारप्रतिबंधकीभूतनानाविधेहजन्मजन्मांतरदोषप्र
तत्र च यद्यपि वस्तुनोऽपरोक्षत्वादपरोक्षमेव ज्ञानमुत्पद्यते तथाऽप्यसंभावनाविपरीतभावनातिरस्कृतत्वान्मलिनचित्तेषु परोक्षमिव भव

**तव परिचरंत्यखिलसत्त्वनिकेततया त उत पदाक्रमंत्यविगणय्य शिरो निर्ऋतेः परिवयसे पशूनिव गि**
**रा विबुधानपि तांस्त्वय्यकृतसौहृदाः खलु पुनंति न ये विमुखाः २७ ॥ ७ ॥**

तीति नापरोक्षसंसारभ्रमनिवृत्तिसमर्थम् भगवत्परिचर्यया तु सम्यगमलचित्तानां तत्प्रसादेन लब्धापरोक्षज्ञानानाम फलत एवकरकलितो मोक्ष इति
निबंधनिरासाय भगवद्भक्तिरवश्यकी भक्तिं विना दोषक्षयलक्षणचित्तशुद्ध्यसंभवात् अशुद्धचित्ते भगवत्प्रसादाभावात् तत्प्रसादाभावे साक्षात्का
रस्य खपुष्पायमाणत्वमिति सर्वसिद्धांतात् प्रतिबंधकक्षयं विनैव दशमादिवाक्यदृष्टांतेन चक्षुरादिदृष्टांतेन वा श्रवणमात्राद विद्यानिवर्तकसाक्षात्का
रांगीकारे कर्मोपासनापेक्षा[illegible]ः तथा च यज्ञादिश्रुतिविरोधः सर्वापेक्षाधिकरणविरोधश्च दुर्निवारः सर्वोपनिषत्सू पासनाविधिवाक्या
नां पादवैयर्थ्यापातश्च सोपयमात्रापेक्षाभावापत्त्या शांत्यादिसाधनविधायकश्रुतिसूत्रविरोधश्चेत्यादि बहुव्याकुलं ननु शांत्यादेः साधनत्वं शा
नोदांत इत्यादिश्रुतिबलात्स्वीक्रियते इति चेत् नूर्किं यस्य देवे परा भक्तिरित्यादिश्रुतिदर्शने गाढमंधोसि अस्यां हि श्रुतौ तस्य भक्तिमत एते कथिता
अर्था ब्रह्मात्मैक्यादयः प्रकाशंते साक्षात्कृता भवंति इत्यन्वयो भक्तिहीनस्य गुरुणा कथिता अप्यर्था न प्रकाशंत इति व्यतिरेकसिद्धेः स्पष्टत्वा
त् ननु तथापि शारीरकसूत्रभाष्यादौ भक्तेः साधनत्वं नांगीकृतमिति चेन्मैवं दुराग्रहग्रहग्रस्तप्रज्ञानां तथाभिमानात् द्वितीयाध्याये हि पांचरात्रागम
स्य विरुद्धार्थदूषणाय प्रवृत्ते रुत्पत्त्यसंभवादित्यधिकरणे भगवतोऽभिगमनपूजार्थद्रव्यार्जनपूजनाष्टाक्षरादिमंत्रजपध्यानादिलक्षणमाराधनं तात्रा
धिकरणे प्रतिषिध्यते ७ ॥ ७ ॥

श्रुतिस्मृत्योरीश्वरप्रणिधानस्यप्रसिद्धत्वादित्यर्थकभाष्येणस्पष्टंसाधनभक्तेरंगीकारात् तथानृतीयाध्यायेद्वितिपदद्वयकृते नावत्वंहिप्रतिषेधनीत्यधि करणेनदव्यक्तमाहहीतिसूत्रेणाब्रह्मचक्षुरादिकरणैः कृच्छ्रादितपसाग्निहोत्रादिकर्मणाअक्तंसाक्षात्कृतंनभवतीत्युक्तेकथंतर्हिसाक्षात्कृतंभवतीतिशंका नरत्वेनप्रवृत्तेअपिसंराधनइत्यादिसूत्रेभाष्यं संराधनकालेपश्यंतियोगिनः संराधनंभक्तिध्यानप्रणिधानाद्यनुष्ठानमिति भक्तिर्माहात्म्यज्ञानपूर्व कः स्नेहाख्योंनः[illegible]तिब्रह्मविद्याभरणेव्याख्यानं जपनमस्कारादिरादिशब्दार्थइतिरामानंदीयव्याख्यानं अत्रभाष्यादौस्पष्टंभक्तिः प्रतिपाद्यते एतेनज्ञानमेव[illegible]रीतिकेषांचिदुक्तिः परास्ता ज्ञानपूर्वकः स्नेहाख्यः इतिपदाभ्यांब्रह्मविद्याभरणेभक्तिज्ञानयोर्भेदोक्तेः स्पष्टत्वात् जपनमस्कारपदैरामानंदी[illegible]स्पष्टत्वात् किंचसंराधनसूत्रेब्रह्मात्मैक्यानुसंधानरूपभक्तिविलक्षणेसंराध्यसंराधकभावाभ्युपगमकृताजीवप रमात्मनोर्भेदशंकाप्रकाशादिवा[illegible]दिसूत्रेसन्निरसनंचभाष्याद्युक्तंनस्वरसतः संगच्छतेतिद्रष्टव्यं तथागीताभाष्येमन्मनाभवमद्भक्तइत्यत्रभ गवद्भक्तेरवश्यंभाविमोक्षफलमवधार्यभगवच्छरणैकपरायणोभवेत्युक्तं तथाइदंतेनातपस्कायनाभक्तायकदाचनेतिश्लोके गुरौदेवेचभक्तिरहिताय कदाचनकस्यांचिदवस्थायांनवाच्यमितिभाष्येणदेवगुरुभक्तिहीनेकथितमध्यात्मशास्त्रंनिष्फलमितितात्पर्यकेणयस्यदेवेपराभक्तिरितिश्रुत्यर्थएव-

(तथाचश्रुतयः देहांतेदेवः परंब्रह्मतारकंव्याचष्टे यमेवैषवृणुतेतेनलभ्यः यस्यदेवेपराभक्तिरित्यादयः २७ तपंतुतापैःप्रपतंतु पर्वतात्
(अटंतुतीर्थानिपठंतुचागमान् यजंतुयागैर्विवदंतुवादैर्हरिंविनानैवमृतिंतरंति १४

स्पष्टंवर्णितइत्यलमतिविस्तरेण तथाचविवरणवाचस्पत्यादिसर्वसिद्धांतपर्यालोचनेश्रवणमात्रादपरोक्षसंसारभ्रमनिवर्तकः साक्षात्कारोनसंभ वति भगवद्भक्त्यादिनातुतत्प्रसादात्प्रतिबद्धः साक्षात्कारइतिसिद्धं देहांतइतियइहस्थातुमपेक्षतेतेनस्मैसर्वैश्वर्यंददाति यत्रकुत्रापिम्रियते देहांतेदेवः परंब्रह्मतारकंव्याचष्टेयेनामृतीभूत्वासोमृतत्वंचगच्छतीतिनृसिंहपूर्वतापिनीश्रुतिः अस्यार्थः यउपासकः इहलोकेउत्कर्षेण स्थातुमपेक्षतेतेनस्मैसर्वैश्वर्यंददाति सचयत्रकुत्रापिकुदेशेम्रियतांतस्मैदेवः श्रीनृसिंहोदेहांतेपरंब्रह्मतारकंप्रणवप्रतिपाद्यंप्रणवेनव्या चष्टेकथयति अत्रश्रीमच्छंकरभगवत्पादभाष्यंकामिनंप्रकृत्यदेहांतइतिविशेषणोपादानं कामित्वेनप्रागनधिकारात् निष्कामस्यत्वर्वाग पिदेवः परंब्रह्मतारकंव्याचष्टेइति येनप्रणवव्याख्यानेनब्रह्मणाऽधिगतेनामृतीभूत्वादेहत्रयोपाधेर्मुक्तोभूत्वासश्रोताकैवल्यंप्राप्नोतिइ ति अनेनभगवद्भक्तस्याशारीरकशास्त्रोक्तश्रवणमननादिज्ञानसाधनानुष्ठानंविनैवभगवदुपासनमात्रेणज्ञानान्मोक्षइतिसिद्धांतोद्योतितः तेनयदाभक्तेःसाधनांतरनिरपेक्षतयाज्ञानहेतुत्वंतदातस्याः श्रवणादिष्वनुष्ठानेकृतरांश्रवणादिभ्योज्ञानसिद्धिरितिकैमुत्यसिद्धमितिभावः यमिति एषःपरमात्मायंपुरुषंवृणुतेसंभजति अनुगृह्णातितेनैवलभ्योनान्येनेत्यर्थः अथापितेदेवपदांबुजद्वयप्रसादलेशानुगृहीतएवहि जाना

विश्वत्वंभगवन्माहिम्नोनचान्यएकोपिविरंचिविन्वन् श्रेयः स्रुतिंभक्तिमुदस्येत्यादिश्रवणात् यस्यदेवइति नन्वेवमन्योपनिषत्कनश्रूयतइतिचेन्न गुणोपसंहारन्यायेनसर्वोपनिषत्त्वेनदृष्टोपसंहारात् छांदोग्यादावश्रुतायाआकाशायुसत्तेरिवबृहदारण्योक्तशांत्यादेरिवचेतिदिक् १४ २७

त्वमकरणइति नवस्तुनस्तथात्वंकर्तृत्वभोक्तृत्वं जीवानामपिनह्यात्तवकर्तृत्वादिराहित्यंतुल्यमंशांशसमभेव विशेषेणेति केनोत्कर्षेणेश्वरः सेव्यः केनापकर्षेणजीवः सेवकइत्यर्थः अपाणीति करचरणहीनोपिजवनः विभुत्वेनतत्रतत्रगच्छतीवेतिवेगवानिवभाति ग्रहीतामर्वाधार त्वात् करेणासर्वग्रहणकर्तेव एतदितरकर्मेंद्रियव्यापारोपलक्षणं चक्षुरादिज्ञानेंद्रियशून्योपिअनावृतस्वरूपज्ञानेनरूपशब्दादिविषयोपलब्धिशाली-

ननुयद्यखिलसत्वनिकेतत्वेनभगवतः सेव्यत्वमुच्यते नर्हितत्करणसंबंधात्कर्तृत्वभोक्तृत्वप्रसक्त्येयानाम् नवस्तुनस्तथात्वमितिचेत्तर्हिजीवानामपितत्तुल्यत्वमितिकेनविशेषेणपुनः सेव्यसेवकत्वमिति इमामाशंकांपरिहरंत्यः अपाणिपादोजवनोगृहीतापश्यत्यचक्षुः सशृणोत्यकर्णः सवेत्तिवेद्यंनचतस्यवेत्तानमाहुरग्र्यंपुरुषंपुराणमित्याद्याः श्रुतयस्तुवंतीत्याहत्वमकरणइति करणसंबंधरहितएव अखिलकारकशक्तिधरः अखिलानांप्राणिनांयानिकारकाणिकरणानींद्रियाणितेषांशक्तीर्धारयतिप्रवर्तयतीति तथाकुतः स्वराट् यतः स्वेनैवराज

त्वमकरणः स्वराडखिलकारकशक्तिधरस्तवबलिमुद्वहंतिसमदंत्यजयानिमिषाः वर्षभु
जोऽखिलक्षितिपतेरिवविश्वसृजोविदधतियत्रयेत्वधिकृताभवतश्चकिताः २८ ७

तेदीप्यतेनहिस्वतः सिद्धज्ञानशक्तेरिंद्रियापेक्षेत्यर्थः अतस्तवबलिमुद्वहंतिपूजांकुर्वंतीति अजयाअविद्ययासहितास्तयायुताइत्यर्थः अनिमिषादेवाइंद्रादयः तत्सृज्याविश्वसृजोब्रह्मादयोपियथास्वंकाएवकिंकरास्स्वामिनंसेवंतेतथाऽविद्यायुक्ताद्देवादयस्त्वामितिलोकोक्तिः समदंतिचमनुष्यैर्दत्तंहव्यकव्यादिलक्षणंबलिंभक्षयंति अत्रदृष्टांतः वर्षभुजोऽखिलक्षितिपतेरिवेति यथावर्षभुजःखंडमंडलनपयोऽखिलक्षितिपतेर्महामंडलेश्वरस्यस्वप्रजादत्तबलिभुजोबलिमुद्वहंतितद्वदितिकथंबलिंवहंतितत्राह विदधतियत्रयेत्वधिकृताभवतश्चकिताइतित्वत्तोभीताः संतोयस्मिन्कर्मणिनियुक्तास्तेतत्कुर्वंतीति त्वदाज्ञापालनमेवबल्युद्वहनमित्यर्थः तथाचश्रुतिः भीषास्माद्वातः पवतेभीषोदेतिसूर्यः भीषास्मादग्निश्चेंद्रश्चमृत्युर्धावतिपंचमइति २८ अतींद्रियोपियोदेवः सर्वकारकशक्तिधृक् सर्वज्ञः सर्वकर्ताचसर्वसेव्यंनमामितम् १५ ७ ७ ७ ७ ७ ७ ७

वेद्यंसर्वजडजातंवेत्ति तदितरस्यसर्वस्यजडत्वात्नरस्यवेत्तानेत्यर्थः ईश्वरोनावृतज्ञानशक्त्यादिमान् जीवस्त्व विद्यावृतत्वादिंद्रियाधी-

नज्ञानक्रियाशक्तिशालीनिर्विशेषः भीषाभीत्यावायुःपवनेवातीत्यर्थः पंचानांग्रहणंब्रह्मादिस्तंबांतचराचरोपलक्षणं १५ २८
स्थिरचरेति यथाग्नेरिति अग्नेरेकरूपादद्वितीयाच्चक्षुद्राअल्पाअग्निकणाविविधमुच्चरंति तथानद्दात्मनःकारकांतरनिरपेक्षादेकरूपात्सर्वे
प्राणाइंद्रियाणिलोकाभूरादयोविषयादेवाइंद्रियाणांलोकानांचाधिष्ठातारःभूतानिब्रह्मादिस्थावरांतशरीराणिआत्मानःअंतःकरणोपाधयो
जीवाश्चव्युच्चरंति ईक्षणलेशेनेति सर्जनेच्छादिरूपेणेत्यर्थः असद्वाइति अग्रेशून्यमासीत् शून्यादेवजगदभूदितिपूर्वपक्षार्थः सिद्धांते
नदेवंकरणभवनेक[illegible]वरंकरणपरतंत्रानराभजंतीत्यन्वयम् नकेवलमियदेवकारणं ततउत्पन्नत्वेनापितत्परतंत्रत्वादितिवदंतियथाग्नेः
क्षुद्राविस्फुलिंगाव्युच्चरंतिएवमेवास्मादात्मनःसर्वेप्राणाःसर्वेलोकाःसर्वेदेवाःसर्वाणिभूतानिसर्वएतआत्मानोव्युच्चरंतीत्याद्याःश्रुतयइत्याह-
स्थिरचरजातयइतिहेविमुक्तनित्यमुक्तयदितवअजयामायायाविहरः विहारः क्रीडाभवतितदास्थिरचरजातयः स्थिराश्चचराश्चजा
तयःजात्यालिंगितादेहायेषांतेजीवाः स्युः भवेयुः कथंभूतस्यततः अजातः परस्यदूरेवर्तमानस्यासंगस्येत्यर्थः कथंविहारःउदीक्षयाईक्ष
णलेशेनननुमयिलीनानांजीवानांकथंजन्मस्यात्तत्राहउत्थनिमित्तयुजइति ईक्षयैवउत्थितानि आविर्भूतानिनिमित्तानिकर्माणितद्यु-

स्थिरचरजातयःस्युरजयोत्थनिमित्तयुजोविहरउदीक्षयायदिपरस्यविमुक्ततनः नहि
परमस्यकश्चिदपरोनपरश्चभवेद्वियतइवापदस्यतवशून्यतुलांदधतः २९ ७

क्तानिलिंगशरीराणियेषांतेयुज्यंतइतितथा ननुकिंनिमित्तोत्थानेनमदिच्छयैवभवंतु नत्वयिवैषम्याभावात्विषमसृष्टेरयोगादित्याह
परस्येति नवपरमस्यउत्तमस्यपरमकारुणिकस्यवियतइवाकाशसदृशस्यसमस्येत्यर्थः कश्चिदपरः स्वीयःपरोस्तीयश्चनभवेत्नसं-
भवतीत्यर्थः असद्वाइदमग्रआसीत् ततोवैसदजायतेत्यादिश्रुत्याशून्यपूर्वकत्वमिवप्रतीयते तदर्थंपुनर्विशिनष्टि शून्यतुलांदधतः
शून्यसाम्यंभजतः तदेवदर्शयितुंपुनर्विशिनष्टि अपदस्येति नपद्यतइत्यपदः तस्यवाङ्मनसयोरगोचरस्येत्यर्थः २९ त्वदीक्षणव
शक्षोभमायाबोधितकर्मभिः जातान्संसरतःखिन्नान्नृहरेपाहिनःपितः १८ ७ ७ ७

तुइदंजगदग्रे सृष्टेःप्राक्असत् अव्याकृतनामरूपत्वादसत्तुल्यमतिसूक्ष्मंब्रह्मैवासीत् ततोब्रह्मणःसत्व्याकृतनामरूपंजगदजाय
तेति १८ २९ ७ ७ ७ ७ ७ ७

अपरिमिताइति संसरंतोभजंतीति संसारान्मोक्षायभजंतीत्यर्थः तत्राद्वैतमतेबंधमोक्षव्यवस्थायाअसंभवंशंकते तत्रयदीति सर्वमुक्ता
नि तत्राचकश्चनमुक्तः केचनबद्धाइतिव्यवस्थापरिदृश्यमानानस्यादित्यर्थः तस्यैवांशांतरेणेति अवच्छेदवादाभिप्रायेणपूर्वपक्षः यथानेकघटावच्छि
न्नएकआकाशएक घटनाशेनस्य घटाकाशस्यमहाकाशैक्येपिसमहाकाशो घटांतरेषुतथैवावच्छिन्नस्तिष्ठतीति नमहाकाशैक्येनापिमुक्तिर्सिद्धिः एवमा
त्मनएकत्वादनेकाविद्यावच्छिन्नस्यतस्यैकस्मिन् देहेज्ञानोत्पत्त्या ऽविद्यानाशेनतच्छब्दवैतन्यैक्येपितस्यैवतच्छब्दवैतन्यस्यदेहांतरे ऽविद्यावच्छिन्नस्यसत्वान्न
मोक्षःसंभवति नहिकरचरणादौबहुशृंखलाभिर्बद्धपुरुषएकपादस्थशृंखलानाशेमुक्तोभवतीतिभावः केचनकाणादाद्यः प्रतिबिंबपक्षाश्रयेण
सिद्धांतमाह तत्रनेति अविद्याभेदेनेति अनेकाविद्यास्वएकस्येश्वरस्यबिंबरूपस्यानेकेप्रतिबिंबाः नहिप्रतिबिंबस्यप्रतिबिंबांतरमंशः एकस्यप्र
तिबिंबस्योपाधिवशेनचांचल्येमालिन्येवाप्रतिबिंबांतरस्यतदभावात् ततश्चतस्यैवांशांतरेणसंसारइतिदूषणानवतारः यत्रदेहेज्ञानेनाविद्याना
शस्तत्प्रतिबिंबस्यैवबिंबेनैक्यान्मुक्तिः अन्यस्ययथापूर्वंसंसारः सतुनेतरप्रतिबिंबस्यकोप्युपद्रवः नह्येकघटस्थसूर्यप्रतिबिंबः प्रतिबिंबांतरस्यांशस्तं
एवंतावत्परमात्मनःसकाशादविद्याकृतकार्योपाधयस्तदंशाएवजीवाजाताः संसरंतोभजंतीत्युक्तंतत्रयदोक्ता ऽविद्यानदाजीवस्याप्येकत्वादेक
मुक्तौसर्वमुक्तिप्रसंगः अथनानाविद्यास्तर्हि तस्यैवांशांतरेणसंसारानपगमान्निर्मोक्षइत्यादिनर्कवलेनवस्तुतएवनानात्मानः तत्रचतेषा

अपरिमिताध्रुवास्तनुभृतोयदिसर्वगतास्तर्हिनशास्यतेतिनियमोध्रुवनेतरथा ८

मणुत्वेदेहव्यापिचैतन्यंनस्यात् देहपरिमाणत्वेचमध्यमपरिमाणानांसावयवत्वेनानित्यत्वंस्यात् अतःसर्वगताःनित्याश्चेतिकेचनमन्यंते तत्रतता
वदुक्तदोषप्रसंगःअविद्याभेदेनतच्छुक्तिभेदेनवाबद्धमुक्तव्यवस्थासंभवात् ईश्वरस्यतुनकेनाप्यंशेनसंसारशंकेत्युक्तमेव प्रसिद्धंचात्मैक्यंसर्वश्रुतिस्मृ
भवति नन्वविद्याभेदांगीकारेगौरवंतत्राह तच्छुक्तिभेदेनवेति यथामहानतिरेकान देशभृतानिदामानिभिन्नानियद्वापच्छिन्नंतस्यैवगांमोक्षएवमेकाविद्या
तद्देशप्रतानास्तच्छन्नयोभिन्नाभिन्नास्तास्तुपरमात्मनः प्रतिबिंबानानाजीवाज्ञानेनयच्छन्नस्तुच्छेदस्तस्यैवबिंबैक्येनमुक्तिरित्यर्थः ननुतस्यैवांशांतरेणसंसा
रइत्यनेनप्रतिबिंबपक्षेपीश्वरस्यैकस्यानेकेप्रतिबिंबाअंशाएकप्रतिबिंबमुक्तावपीश्वरस्यबिंबस्यप्रतिबिंबांतररूपांशांतरेणसंसारानपगमइतितस्यैवांशांतरेणसंसारइत्यने
नदूषणापादनमभिप्रेतमित्याशंकायामाह ईश्वरस्येति प्रतिबिंबचांचल्यादिधर्माणांबिंबेसंबंधगंधस्याप्यदर्शनात् प्रतिबिंबबिंबांशत्वस्यौ
पचारिकत्वादीश्वरस्यबिंबस्यकेनाप्यंशेनबद्धत्वमुक्तत्वेनवाप्रतिबिंबभूतजीवेनसंसारीबद्धत्वंमुक्तत्वंवानेत्युक्तमेवेत्यर्थः ननुवस्तुतोनानात्म-
स्वीकारेणापिबद्धमुक्तव्यवस्थासंभवति अविद्याद्युपाधिकृतएवात्मभेदोवस्तुतएकएवात्मेतिपक्षेणापिसासंभवति तत्रकिंविनिगमकंयदो

पाधिकात्मभेदाश्रयेणैवसाव्यवस्थोपपन्नत्वात् प्रसिद्धंचेति एकोदेवः सर्वभूतेषुगूढः नेहनानास्तिकिंचन यथाह्ययंज्योतिरात्माविवस्वानपोभिन्नाबहुधैको
नुगच्छन् उपाधिनाक्रियतेभेदरूपोदेवः क्षेत्रेष्वेवमजोयमात्मा एकधाबहुधाचैवदृश्यतेजलचंद्रवदित्यादिश्रुतिषुवाक्यवात्मैक्यमौपाधिकएवात्मभेदइ

किंचइमंपक्षमंतर्यामिब्राह्मणमपिनसहतइत्याह अपरिमिताइतियस्मात्एवानंताः ध्रुवास्तेनैवरूपेणनित्याः सर्वगताश्चतनुभृतोजीवाय
दिस्युः तर्हितेषांसमत्वात् शास्यशासकत्वघटनइतिकृत्वाहेध्रुवनियमोनियमनंतत्त्वयानस्यात् इतरथातुघटेन कथंयन्मयमुपाधिनोयदि
कारमायंयज्जीवाख्यमजनिजातंतत्तस्यस्वविकारस्यनियंतृनियामकंभवेत् अविमुच्यकारणतयाअपरित्यज्यकिंततसममनुस्यूतम्
ननुकिंयत्तच्छब्दैः ज्ञायतेचेदुच्यतामिदंतदितिअतआह अनुजानतांयदमतमिति जानीमइतिवदतांयदमतमविज्ञातमायम्

अजनिचयन्मयंतदविमुच्यनियंतृभवेत्सममनुजानतांयदमतंमतदुष्टतया ३०

अविषयत्वात् तथाचश्रुतिः यस्यामतंतस्यमतंमतंयस्यनवेदसः अविज्ञातंविजानतांविज्ञातमविजानतां अवचनेनैवप्रोवा
चसहतूष्णींबभूवेत्यादि किंचमतस्यज्ञानस्यदुष्टतयादोषश्रवणात् तथाचश्रुतिः यदिमन्यसेसुवेदेति दहरमेवापिनूनं-
त्वंवेत्थब्रह्मणोरूपंयदस्यत्वंयदस्यदेवेष्वित्यादि तस्माद्यत्तच्छब्दावद्योत्यमतर्क्यंकिमपिसर्वानुस्यूतत्वेनसमंनियंतृभवेदित्य
र्थः ३० अंतर्यंता सर्वलोकस्यगीतः श्रुत्यायुक्त्याचैवमेवावसेयः यःसर्वज्ञःसर्वशक्तिर्नृसिंहः श्रीमंतंतंचेतसैवावलंबे १७

निप्रतिपादनात्काणादादिपक्षोनग्राह्यइत्यर्थः आत्मनानात्वखंडनंश्लोकारूढंकुर्वन् अवच्छेदपक्षेदूषणंव्यंजयति ) किंचेति इमंप
क्षंकाणादाद्युक्तमात्मनांविभुत्वनानात्वादिकमवच्छेदपक्षंचांतर्यामिब्राह्मणंनसहतइत्यर्थः आत्मनिति पृथ्व्यात्मनमंतरोयमयतीत्या
दौहिदेहाद्यंतः स्थित्वापरमात्मनोनियाम्यकत्वमुक्तं नतुसारथ्यादिवत्बहिःस्थित्वेतितत्त्वथपरंत अवच्छेदपक्षेअविद्याद्यंतःस्थितस्यजी
वत्वात्तदवच्छिन्नस्य नियामकस्योपाध्यंतरभावात् नहिघटेघटावच्छिन्नंघटानवच्छिन्नंचेत्याकाशद्वयमस्ति प्रतिबिंबपक्षेतुजलाव-
च्छिन्नजलप्रतिबिंबितेत्याकाशद्वयवदविद्यावच्छिन्नमविद्याबिंबितंचनिर्वेतन्यद्वयमस्तितत्रावच्छिन्नस्यनियामकत्वंप्रतिबिंबस्यजीव

स्यनियम्यत्वमितिसिद्धं तस्मिंस्तस्य नियामकत्वमितिदिक् समत्वादिति विभुत्वेननित्यत्वेनचेश्वरसमत्वाज्जीवस्यत्वच्छास्यनानेत्यर्थः नियमनंत्व
यनस्यादिति एवमत्यैक्यसिद्धांतेऽप्यवच्छेदपक्षाश्रयणेनियम्यनियामकभावोनस्यादित्यपिबोध्यं उपाधिनइति अविद्याद्युपाधिवशात् बिंब-
रूपब्रह्मणोविकाररूपंजीवात्मजातं तत्बिंबरूपंब्रह्मस्वविकारस्यप्रतिबिंबस्यजीवस्यनियामकमित्यर्थः ननूपाधिवहिष्ठस्यबिंबत्वंतांतर्ग
तस्यनथाचकथंप्रतिबिंबमविमुच्योपाध्यंतःस्थित्वाबिंबस्यनियामकत्वंतत्राह समनुस्यूतमिति जलावच्छिन्नाकाशमहाकाशयोरैक्यवत्
अविद्यावच्छिन्नबिंबचैतन्ययोरैक्यादुपाध्यवच्छिन्नानुस्यूतस्वरूपेणबिंबस्यैवनियामकत्वमितिभावः यस्येति यस्यब्रह्मविदोब्रह्म अमतम
विदितमितिनिश्चयस्तस्यब्रह्ममतंसब्रह्मवेदेत्यर्थः यस्यतुमतंज्ञातंब्रह्मेतिनिश्चयः सब्रह्मनैववेदेत्यर्थः यस्माद्विजानतांसम्यक्ज्ञानिनांब्रह्म
अविज्ञातंज्ञानाविषयइतिपक्षः अविजानतांअज्ञानिनांविज्ञातंज्ञानविषयोब्रह्मेतिपक्षःइति अवचनेनेति वक्ताअवचनेनवचनाभावेनैवप्रोवा
चब्रह्मवाङ्मनसागोचरमितिलक्षणयाकथयामास सचश्रोतातेनैवलक्षणेनसर्वप्रमाणाविषयंब्रह्मेतिबुध्वातूष्णींबभूवनकिंचिदपिप्र-
श्नादिकृतवानित्यर्थः यदिति यदिकदाचिन्मन्यसेसुष्ठुवेदाहंब्रह्मेति नहित्वंयदस्यब्रह्मणोरूपंतदल्पमल्पमेववेत्थ यदस्यब्रह्मणोदेवेष
धिदैवतंरूपंतदल्पमेवत्वंवेत्थेत्यर्थः १७ ३० ६ ६ ६ ६ ६
नघटतइति नन्विति परमात्मनोबिंबात्प्रतिबिंबाजीवाजायंते इतिकारणस्यबिंबस्यकार्यजीवनियामकत्वेजीवस्यकार्यत्वेनानित्यत्वप्रसं
गइत्यर्थः उपाधिजन्मनैवेति अंतःकरणोपाधिजन्मनाजीवानांबुद्धिप्रतिबिंबितप्रमातृसंज्ञकानांजन्मोच्यतइत्यर्थः अविद्याप्रतिबिं
ब्रनुयदिच परमात्मनोजीवाजायंतइतिनियंतृनियम्यभावउच्यते तथासतिजीवानामनित्यत्वप्रसंगेनप्रतिदिनंकृतनाशाकृताभ्यागम
प्रसंगःस्यात् किंचतदामोक्षोनामजीवस्यस्वरूपहानिरेवस्यात् नचैतद्युक्तंस्वप्रकाशानंदात्मनोऽविद्याकृतानर्थनिवृत्तिमात्र-

नघटतउद्भवः प्रकृतिपूरुषयोरजयोरुभययुजाभवंत्यसुभृतोजलबुद्बुदवत्

स्यमोक्षत्वाभ्युपगमादित्याशंक्योपाधिजन्मनैवजीवानांजन्मउच्यतेनस्वतः अघटनादित्याह नघटतइतितत्रकिंप्रकृतेर्जीवरूपेणो
द्भवःस्यात् पुरुषस्यवाउभयोर्वाआद्येजीवानांजडत्वापत्तिः द्वितीयेपुरुषस्यविकारित्वप्रसंगः अतएवततृतीयइत्याशयेनोक्तंप्र
कृतिपुरुषयोरुद्भवोनघटतइतिश्रुत्याऽजत्वप्रतिपादनादपीत्याह अजयोरिति तथाचश्रुतिः
ब्रह्मजीवोऽविद्यायाअनादित्वादनादिरेवेति ततस्योत्पत्तिः जीवइशोविशुद्धाचिदित्यनेनषण्णामनादित्वोक्तेः अजयोरिति अना १८
द्योरित्यर्थः ६ ६ ६ ६

अजामेकामिति नजायतइत्यजानांमूलप्रकृतिं लोहितशुक्लकृष्णांरजःसत्त्वतमोगुणवतीं सरूपांत्रिगुणात्मिकांप्रजांएको ऽजोजीवस्तांशब्दादिविषय
रूपतापन्नांजुषमाणः सन्ननुशेतेनिरंतरंभुंक्ते जीवेनभुक्तोभोगोयस्यांतां जीवेनभुज्यमानामेनामन्यः परमात्माजहातिनास्यामासक्तिंकरोतीत्यर्थः
यद्वाएकोजः अज्ञानीजीवः अन्यःअजोब्रह्मज्ञोजीवइति अत्राजाशब्दनगौण्यावृत्त्यालौकिकछागीसादृश्यंरक्तादिरूपवत्त्वांतेजोबन्नात्मिकायांप्रकृतौप्र
तिपाद्यतेनेनतुयोगवृत्त्याजन्मराहित्यमितिकल्पनोपदेशाच्चेतिसूत्रस्यभाष्यमनेश्रुत्यंतरमनुसंधेयं परस्पराध्यस्तमिति परमात्मनिप्रकृतिरनादि
रध्यस्तास्वरूपेणतस्यांपरमात्मनोपिसत्तास्फूर्तिरूपेणसंसर्गाध्यासः अधिष्ठानस्यशुक्त्यादेः संसर्गमात्रंरजतेऽध्यस्यते रजतंस्वरूपेणशु
(अजामेकांलोहितशुक्लकृष्णांबह्वीःप्रजाःजनयंतींसरूपाम् अजोह्येकोजुषमाणोनुशेतेजहात्येनांभुक्तभोगामजोऽन्यइति उभयसुजातुभवं
तिउभयंचनरुध्यतइतिउभययुक्तसंबद्धंपरस्पराध्यस्तमितियावत् तेनअरूपृतः प्राणाद्युपाधयोजीवाजायंतइत्यर्थः जलबुद्बुदवदितियथाके
वलेनसलिलेनानिलेनवाजलबुद्बुदानभवंतिकिंतुमिलिताभ्यांतद्वत्तत्रयथाऽनिलोनिमित्तंजलमुपादानं एवमत्रापि प्रकृतिर्निमित्तंपुरुष
उपादानं तस्माद्वाएतस्मादात्मनआकाशःसंभूतः सोकामयतबहुस्यांप्रजायेयेति यथाग्नेःक्षुद्राविस्फुलिंगाव्युच्चरंत्येवमेवास्मादात्मनःस)

स्थितइमेततोविविधनामगुणैःपरमेसरितइवार्णवेमधुनिलिल्युरशेषरसाः ॥ २१ ॥ ६

(र्वेप्राणाः सर्वेलोकाः सर्वेदेवाःसर्वाणिभूतानिसर्वएवात्मानोव्युच्चरंतीत्यादिश्रुतिषुचेतनाचेतनप्रपंचस्यपरमात्मोपादानत्वश्रवणात् क्वचि
कारित्वंपरिणामानंगीकारात् केचित्तुभः परिणाममंगीकृत्यआत्मनोविकारभियाविपरीतंनिमित्तोपादानभावमिच्छंति)

कारणस्यतेइतिसिद्धांतात् परमात्मनोपिस्वरूपाध्यासेबाधापत्त्याशून्यवादप्रसंगात् प्राणाद्युपाधयइति लिंगदेहस्यैवसृष्ट्यारंभेजन्म
भवतितेनलिंगदेहांतर्गतबुद्धिजन्मनाबुद्धिबिंबितोजीवोजायतइत्युच्यतइत्यर्थः लिंगदेहस्यापिप्रलयेसंस्काररूपेणाविद्यायांस्थितस्यैवप्रा
दुर्भावमात्रंभवति सत्कार्यवादात्स्थूलस्यापिसावशेषत्वात् अतोनकृतनाशादिदोषइतिभावः तस्मादिति तस्मादुपक्रमोक्तादेतस्मात्सत्यं
ज्ञानमनंतंब्रह्मेतिलक्षितादात्मनः परमात्मनउपादानादाकाशउत्पन्नआकाशभावापन्नाद्ब्रह्मणएववायुरित्यादिरर्थः परिणामानंगीकारादिति कारणसमसत्ता
कोन्यथाभावःपरिणामःकारणविषमसत्ताकोन्यथाभावोविवर्तः व्यावहारिकसत्यत्वयुक्तमृद्दुग्धादेर्व्यावहारिकसत्यंघटदध्यादिजायतइति
घटादिः परिणामः व्यावहारिकसत्यत्वयुक्तशुक्त्यादेः प्रातिभासिकसत्यंरजतादिजायतइतिरजतादिर्विवर्तः परिणामितएवकारणस्यवि

कारित्वं विवर्तोपादानस्य प्रकृते परमार्थिकसत्याद्ब्रह्मणो व्यावहारिकसत्त्वं जगदुत्पद्यत इति विवर्तोपादानत्वं ब्रह्मण इति नाविकारित्वप्रसंगइत्यर्थः विपरीतं ब्रह्मनिमित्तं प्रकृति
स्यादानुमिति भवतीति नचैवं जीवानामनित्यत्वेन स्वरूपहानिरेव मोक्षइति दोषापत्तिः प्रतिबिंबस्य बिंबरूपतया सत्त्वात्स्वरूपगमात् विवरणमतेहि प्रतिबिंबाध्यासोनधर्म्य
ध्यासः किंतु बिंबभेदोपाधिधर्मस्थितत्वादिधर्ममात्रमध्यस्यते स्वरूपं तु सत्यं बिंबात्मकमेवेति सिद्धांतात् भारतीतीर्थसिद्धांते परं प्रतिबिंबमिथ्यात्वु
क्तिरंजनवत् तन्मते वस्तुतः परमार्थिकजीवस्य मोक्षान्वयि त्वं बोध्यं एवं चाविद्योपाधिकस्यानादेर्बुध्युपाधिकस्य सादेर्वा जीवस्येशनियम्यत्वेन
विरुद्धं प्रतिबिंबमात्रस्य बिंबनियम्यत्वोपपत्तेरितिसंक्षेपः उपाधिभिः सहेति वास्तवजन्मसत्त्वेउपाधिलयेपि नैवलयः स्यात् ज
सर्वथानाव्यक्तनिपुरुषैक्याद्भवतीतिसिद्धम् तदेकमेवाद्वितीयं ब्रह्म अजामेकामविनाशीवारेयमात्मेत्यादिश्रुतिबलात्उत्पत्तिश्रव
णाच्चजीवानामौपाधिकमेवजन्मनत्वनइत्युक्तम् उपाधिलयेनपरमात्मनिपुनर्लयश्रवणादपिनवास्तवंजन्मेत्याह त्वयितइति त्वयि
कारणात्मनितइमेजीवाः ततइतियतोनवास्तवंजन्मतस्माद्विविधनामगुणैरनेकप्रकारकार्योपाधिभिः सहनिलिल्युःलीनाबभूवुः त
त्रसुषुप्तिप्रलययोर्मधुन्यशेषरसाइवलीयंते यथामधुनिसकलकुसुमरसाविशेषतोनुपलक्ष्यमाणाअपिसामान्येनोपलक्ष्यंतेए
वंस्वापादौविशेषमात्रलयात्कारणस्यविद्यमानत्वात्सामान्यतोवर्ततेमुक्तौतुकारणस्यापिलयात्त्वयिपरमेनिरुपाधौसरितइवार्णे
वेलीयंतइतिविवेकः तथाचश्रुतयः यथासौम्यमधुमधुकृतोमधुनिस्तिष्ठंति नानात्ययानांवृक्षाणांरसान्समवहारमेकतांसंगमयंति
तेयथानतत्रविवेकंलभंते अमुष्याहंवृक्षस्यरसोस्म्यमुष्याहंवृक्षस्यरसोस्मीत्येवमेवखलुसौम्येमाः प्रजाः सतिसंपद्यनविदुः स
तिसंपद्यामहइति यथानद्यः स्यंदमानाः समुद्रेस्तंगच्छंति नामरूपेविहाय तथाविद्वान्नामरूपाद्विमुक्तः परात्परंपुरुषमुपैति
दिव्यमित्याद्याः यस्मिन्नुद्यद्विलयमपियद्भातिविश्वंलयादौजीवोपेतंगुरुकरुणयाकेवलात्मावबोधे अत्यंतांतंव्रजतिसहसासिंधुव
त्सिंधुमध्येमध्येचित्तंत्रिभुवनगुरुंभावयेतंनृसिंहम् १८ २१ ६ ५ ५
त्वाकाशस्यहिजलोपाधिकजन्मवतोजललयएवलयोनजलसत्त्वेजलस्यतुघटोपाधिकजन्माभावात् घटसत्त्वेपिलयोदृश्यतेनतद्वदितिभावः
कारणस्येति अविद्यायाबीजरूपेणलिंगदेहस्यचेत्यर्थः तत्रसुप्तिप्रलयविषयाश्रुतिः यथासौम्येति हेसाधोमधुमधुकृतोमधुमक्षिकाः मधु
निस्तिष्ठंतिनिष्पादयंति नानात्ययानांनानागतीनांनानाजातीनांवृक्षाणांपुष्परसान्समवहारमाहृत्यएकतांमधुरूपतामापादयंति तेरसाय
थामुष्यवृक्षस्याहंरसइतिभेदंनलभंतेनविदुःपुरुषैर्ज्ञायमानभेदवंतोनभवंतीत्यर्थः पुरुषज्ञानानांरसेषूपचारात् एवमिमाः प्रजाः स्वाप १०
प्रलयादौसतिब्रह्मणिसंपद्यएकीभूयब्रह्मैक्यंप्राप्तावयमितिनविदुरित्यर्थः अथमुक्तविषयाश्रुतिः यथानद्यइति स्यंदमानाःप्रवहंत्यो

गङ्गयाः समुद्रं प्राप्यास्तमदर्शनं प्राप्नुवन्ति तथा ब्रह्मज्ञो विदेहकैवल्यकाले परात्परादेः परं बिम्बभूतं परमेश्वरं प्राप्नोतीत्यर्थः यस्मिन्निति प्रलयस्वापादि
कालेजीवसहितं विश्वं लिंगदेहादिकं विलयं यदपि प्राप्नुवदपि भाति संस्कार रूपेण सूक्ष्मतया तिष्ठति यदिति इण गताविति धातोः शतृप्रत्यये शपो लुकि शतृप्र
त्ययस्य ङित्त्वाद्गुणाभावे इयङपवादः यणेइणो यणिति यणि कृते रूपं गत्यर्थकानां प्राप्त्यर्थत्वस्य प्रसिद्धेः संस्कारावशेषलये हेतुः उद्यदिति सृष्टिकाले
जागरणकाले चोत्सन्नं भवदित्यर्थः निरवशेषलये पुनरुत्पत्तिर्न स्यादिति भावः गुरूपदेशेन ब्रह्माभिन्नकूटस्थात्मसाक्षात्कारे सति अत्यन्तमननं निरव
शेषलयं निरुपाधिनादात्म्यं समुद्रमध्ये नदीवत् व्रजति यस्मिन् तं विश्वाधिष्ठानं विश्वलयाधिष्ठानं मुक्तजीवप्राप्यं त्वमध्ये चित्तं चित्तस्य मध्ये भावये मुक्तजीवैक्य
स्थानत्वोक्त्या मुक्तप्राप्यत्वेन निरुपाधिब्रह्मत्वं नृसिंहस्य व्यंजितं त्रिभुव नस्य गुरुं जनकं हितोपदेष्टारं चेति तद्भजने गुरुद्रोहः कृतघ्नता च व्यज्यते
नृसिंहं नृषु सिंहं श्रेष्ठं हंति तं इति भवबंधच्छेदकत्वोक्त्या तद्भजने मोक्षाभावो व्यज्यते मध्ये चित्तमिति पारेमध्ये षष्ठ्या वेत्यव्ययीभावसमासः निपातना-
त्पूर्वपदे एकारः अव्यालुक्समास इति वादिनो प्राचां नचपारेमध्य इति सूत्रेण सप्तम्या अलुगेव निपात्यत इति वाच्यं गंगायामध्यादागत इत्यर्थे मध्ये
गंगमागत इति प्रयोगानापत्तेरिति दिक् १८ २१ ८ ७ ६ ७ ७

नृषु तव मायया भ्रममममीष्ववगत्य भृशं त्वयि सुधियोऽभवे दधति भावमनुप्रभवम् कथम·
नुवर्ततां भवभयं तव यद्भ्रुकुटिः सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयम् ३२

नन्वेवं तावत्परमेश्वराज्जीवा जायन्ते न तु शेन च कर्माणि कुर्वन्ति पुनस्तत्र लीयन्त इति संसारचक्रे परिभ्रमणमुक्तम् इदानीं तन्निवृत्तये परीत्य भूतानि परी
त्य लोकान् परीत्य सर्वाः प्रदिशो दिशश्च उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसंविवेशेत्या याभगवदनुवृत्तिं विदधतीत्याह नृषु तवमाययेति
नृषु जीवेषु अमीषु तव मायया भ्रमम् उक्तलक्षणमवगत्य ज्ञात्वा सुधियः भृशं त्वयि अभवे भवनिवर्तके भावं स्वभावम् अनुवृत्तिं दधति कुर्वन्ति कीदृशं
भ्रमं अनुप्रभवम् अनन्तप्रभवो यस्मिन् तं भ्रमम् नतः किमत आह कथमिति अनुवर्ततां अनुवर्तमानानां त्वामेव शरणं भजतां भवभयं संसार
भयम् कथं भवेत् न कथंचिदपीत्यर्थः कुतः यद्यस्मात्तव भ्रुकुटिः भ्रूभंगरूपस्त्रिणेमिः तिस्रो नेमय इवावच्छेदाः शीतोष्णवर्षाकाला यस्य सं
वत्सरात्मकस्य कालस्य सः अभवच्छरणेषु न भवान् शरणं रक्षिता येषां तेष्वेव भयं जन्ममरणादिलक्षणं सृजति करोति अत एवं भूतं संसा
रचक्रं लघ्यतन्निवृत्तये सुधियस्त्वयि भावं दधतीति ३२ संसारचक्रक्रकचैर्विदीर्णमुदीर्णनानाभयतापतप्तं कथंचिदापन्नमिह प्रपन्नं
त्वमुद्धरस्व नृहरे नृलोकम् १९ ७ ६ ७ नृषु तव परीत्येति भूतानि परीत्यस
र्वभूतेष्वात्मा एक एवेति ज्ञात्वा लोकान् स्वर्गादीन् कर्मचितत्वेनानित्यान् ज्ञात्वा सर्वा दिशः प्रदिशश्च ऐहिकविषयानप्यनित्यान् ज्ञात्वा प्रथमजां भपील

क्षणांवानमुपस्थायसंसेव्याराधनामनसाकृतस्य पमेश्वरस्यात्मानंस्वरूपं अभिसंविवेश आश्रितवान् कथंतन्मुमुक्षुरित्यर्थः संसारेति अपन्न
विपत्तिग्रस्तं कथंचित् आर्तत्वयाजिज्ञासुतयासकामतयादंभादिनावाबांधपन्नं शरणागतमुद्धरेति १९ ३२
तद्विज्ञानार्थमिति सनिर्विण्णोब्राह्मणोनित्यात्मनत्वसाक्षात्कारार्थंगुरुमेवाभिगच्छेत् नतुनिपुणोपिस्वयंवेदांतंविचारयेत् समित्पाणिःसन्निति
रिक्तपाणिर्नपश्येदितिशास्त्राद्गुपायनपाणिरित्यर्थः धनफल्गुप्याद्यलाभेआकाष्ठमप्युपायनंग्राह्यमितिव्यंजनायसमित्पदं श्रोत्रियंवेदशास्त्रा
ध्ययनसंपन्नंगुरुमितिगुरोः शिष्यसंशयच्छेदेसामर्थ्यं ब्रह्मनिष्ठंब्रह्मसाक्षात्कारशालिनमितिबोधसंचारसामर्थ्यं आचार्यवान्उक्तविधः प्रश
मत्वभगवतिप्रावोमनोनियमेसतिभवतिसो ऽ पिगुरूपसदनंविदधाति तद्विज्ञानार्थंसगुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियंब्रह्म
निष्ठं आचार्यवान्पुरुषोवेद नैषातर्केणमतिरापनेया प्रोक्ता ऽ न्येनैवसुज्ञानायप्रेष्ठेत्याद्याः श्रुतयइत्याह विजितहृषीकवायुभिरि
ति विजितानिहृषीकाणींद्रियाणिवायुश्चप्राणोयैस्तैरपि अदांतमनस्तुरगंअदांतमदमितंमनएवतुरगः दुर्दमत्वसाम्यात् तंये

विजितहृषीकवायुभिरदांतमनस्तुरगंयइहयतंतियंतुमतिलोलमुपायखिदः व्यसन
शतान्विताः समवहायगुरोश्चरणंवणिजइवाजसंत्यकृतकर्णधराजलधौ ३३ ७

यंतुंनियंतुंयतंतिप्रयतंते अतिलोलमतिचंचलम् गुरोश्चरणंसमवहायअनाश्रित्यतेउपायेषुखिद्यंतेक्लिश्यंतीत्युपायखि
दः संतोव्यसनशतान्विताबहुव्यसनाकुलाइहसंसारसमुद्रेसंतितिष्ठंति दुःखमेवप्राप्नुवंतीत्यर्थः हेअजअकृतकर्णधराअ
स्वीकृतनाविकावणिजोयथातद्वत् गुरुणोपदर्शितभगवद्भजनसुखानुभूतौतुस्वतएवमनोनिश्चलंभवतितात्पर्यमितिभा
वः ३३ यदापरानंदगुरोभवत्पदेपदंमनोमेभगवल्लभेत नदानिरस्ताखिलसाधनश्रमः श्रयेयसौख्यं भवतःकृ
पातः २०
स्तोगुरुर्यस्यसएवपुरुषोब्रह्मवेद नैषेति वेदांतशास्त्रजन्यामतिस्तर्केणस्वमतऊहमात्रेणअपनेयाबाधार्हान यद्वातर्केणप्राप्तव्याते
त्यर्थः किंतुअन्येननिपुणेनाचार्येणप्रोक्ताप्रबोधितासतीसुज्ञानायसाक्षात्कारायभवति प्रेष्ठहेप्रियतमेति नाविकेनसंप्रतिपमसं
बोधनं २० ३३ ५ ७ ५ ७ ७

२०

परीक्ष्येति लोकान् भूरादीन् भोग्यान् परीक्ष्य विचारेणानित्यतया निश्चित्य निर्वेदं वैराग्यं प्राप्नुयात् अकृतो नित्यो मोक्षः कृतेन कर्मणा नेति यदाय- स्मिन्काले सर्वे कामा विषयाः येऽस्य विदुषो हृदि बुद्धौ वासनारूपेण प्रविष्टास्ते प्रमुच्यंते नश्यंति अथ तदैव मर्त्यः अमृतो मुक्तो भवति अत्र अस्मिन्नेव जन्मनि ब्रह्म प्राप्नोति ब्रह्मैव भवतीत्यर्थः एतस्यैवेति ब्रह्मलोकस्थानंदाच्छतगुणोत्कृष्टतयोक्तस्य परमानंदस्य ब्रह्मरूपस्य मात्रालेशमन्या

परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन तथा यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि श्रिताः अथ मर्त्योऽमृतो भ वत्यत्र ब्रह्म समश्नुत इत्याद्या वैराग्यमंगं विदधतीत्याह स्वजनकृतेति आत्मा देहः धाम गृहम् असवः प्राणः स्वजनादिभिः किंस र्वरसे सर्वे रसाः मात्रा निविद्यंते यस्मिन् तस्मिन् त्वयि परमानंदे एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंतीति श्रुतेः यतः त्वां सेवमानस्य पुंसः आत्मनि सति नृणां तुच्छैरेतैः किं कः उपयोगः इति सन् सत्यं परमार्थं स्वसुखमजानतामत एव मिथुनतः स्त्रि

स्वजनसुतात्मदारधनधामधरासुरथैस्त्वयि सति किं नृणां श्रयत आत्मनि सर्वरसे इति सदजानतां मिथुनतो रतये चरतां सुखयति को न्विह स्वविहते स्वनिरस्तभगे ३४

या मिथुनीभूय रतये मायासुखाय चरतां प्रवर्तमानानाम् कर्मणि षष्ठ्यौ अजानतः चरतः पुरुषान् को नु अर्थः सुखयति आनंदयति न कोपीत्यर्थः इह संसारे कथंभूते स्वविहते स्वत एव नश्वरे स्वनिरस्तभगे स्वत एव गतसारे पाठांतरे तु को न्विति त्य स्येति द्विशेषणद्वयम् अतस्त्वद्भजनमेवोचितमित्यर्थः ३४ भजनो हि भवान्साक्षात्परमानंदचिद्घनः आत्मैवाकि मतः कुर्यात् तुच्छदारसुतादिभिः २१

निभूतानि ब्रह्मादिस्थावरांतान्युपजीवंतीत्यर्थः पाठांतरे इति को न्विह स्वविहतः स्वनिरस्तभग इति प्रथमांतपाठे २१ ३४

श्रुवीति ऋषयोवेदार्थतत्त्वंजानंतइत्यर्थः तीर्थानिगंगादीनीसदनानिचवृंदावनादीनीनिद्वंद्वः अथवेति पक्षेपुरूपुण्यानिचनानितीर्थानिगुरवस्ते षांसदनानीतिकर्मधारयपूर्वपदगर्भस्तत्पुरुषः येभवत्पदांबुजहृदइत्यादिलक्षणायेचसकृत्त्वयिमनोदधतितेचतेपिचेत्यन्वयः मुंचन्नंगेति अंग

एवंगुरूपदेशेनतत्त्वमवगम्यसारासारविवेकेनचसर्वतोनिर्विघ्नदेवमहत्संगेनोपपत्तिभिःसम्यगवधारयितुंतीर्थसदनानिमुन यः पर्यटंतीतिश्रोतव्योमंतव्यइत्यादिश्रुत्यर्थमाह श्रुविपुरुपुण्यतीर्थसदनानीति तेउक्तलक्षणाः ऋषयोविमदाः निरहंकाराः यतोभवत्पदांबुजहृदः भवतःपदांबुजंहृदियेषांते अतःस्वयमेवअघभिदंघ्रिजलंयेषांतेउतअपितथाविधाअपिपुरूणिबहू निपुण्यानितीर्थानिसदनानिचक्षेत्राणितान्येवोपासनेसेवंतेभायस्तत्रैवमहत्संगोभवतिइतिअथवापुरुअधिकंभगवद्भजनल क्षणंपुण्यंयेषांतानिचतानितीर्थानिचगुरवः महांतइत्यर्थः तेषांसदनानिआश्रमान् यथाहामरसिंहः निपानागमयोस्तीर्थ

श्रुविपुरुपुण्यतीर्थसदनान्यृषयोविमदास्तउतभवत्पदांबुजहृदोऽघभिदंघ्रिजलाः दधतिसकृ
न्मनस्त्वयियआत्मनिनित्यसुखेनपुनरुपासतेपुरुषसारहरावसथान् ३५

मृषिजुष्टेजलेगुराविति नपुनःपुरुषसारहरावसथान् उपासते पुरुषाणांसारंविवेकस्थैर्यधैर्यक्षांतिप्रमुखंहरंतीति तथा तेचते आवसथागृहास्तान् नचतेषांगृहादिभवकुत्सितसुखापेक्षेत्याह दधतिसकृन्मनस्त्वयियआत्मनिनित्यसु खइति सकृदपित्वयियेमनोदधतितेपिगृहाद्यासक्तानभवंतिकिंपुनरेवंभूताइत्यर्थः ३५ मुंचन्नंगतदंगसंगम निशंत्वामेवसंचिंतयन् संतः संतियतोयतोगतमदास्तानाश्रमानावसन् नित्यंतन्मुखपंकजाद्विगलितत्वत्पुण्यगाथामृत स्रोतःसंप्लवसंप्लुतोनरहरेनस्यामहंदेहभृत् २२

तोनरहरेयद्वाअंगंशरीरंतदंगानिचसुतदारगृहधनादीनितेषुसंगमासक्तिंमुंचन्नित्यर्थः २२ ३५ ॥ ॥ ॥ 

सतइदं श्रीमद्भागवतं यैर्यत्प्रसादात्प्रसंप्रकाशितं तान् श्रीधरान् श्रीनृसिंहमपि वंदे जगद्गुरून् १ अत्र सतइदमुत्थितं सदिति चोदितेति पूर्वपक्षः किंपूर्वमीमांसकानां माहोस्वित् सांख्यादीनामिति संदेहे संदिग्धेतु वाक्यशेषादिति न्यायेन श्लोकोपसंहारे उरुवृत्तिभिरुक्थजडान् इति मीमांसकोपादानात् उपक्रमउक्तसतइदमुत्थितमित्यादि पूर्वपक्षोपि मीमांसकानामेवेति निश्चित्यावतारयति नन्विति मीमांसका हि कर्मण एव परमपुरुषार्थहेतुत्वं निश्चित्य सर्वस्य वेदस्य क्रियापरत्वं वर्णयंति कर्मणश्च परमपुरुषार्थहेतुत्वं न देवे निर्वहेत् यदा कर्मफलभूतस्य स्वर्गादिजगतः सत्यत्वादिकं स्यादिति जगतः सत्यत्वं प्रवाहनित्यत्वादिकं च वर्णयंति नहि मोक्षभोग्यात्मकद्वैतस्य मिथ्यात्वेन तत्फलकस्य कर्मणः परमपुरुषार्थहेतुत्वं वेदस्य सर्वस्य असत्यफलकक्रियापरत्वं वा युज्यत इति जगत्सत्यत्ववर्णनं मीमांसकानामेवावश्यकं सांख्यकणादादीनां तु ज्ञानस्याभोग्यात्मरूपेणावस्थानात्मकमोक्षहेतुत्वं वदतां किं जगत्सत्यत्वग्रहेणेति मीमांसकानामेवायं पूर्वपक्षः तत्राम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यत इत्येतावत्पूर्वपक्षसूत्रं अस्यार्थः आम्ना

नन्वाम्नायस्य क्रियार्थत्वादानार्थक्यमतदर्थानां तद्भूतानां क्रियार्थेन समन्वय इति तत्र तत्र जैमिनिना वेदस्य क्रियापरत्वाभिधानाद्

पनिषदामपि तदेवयुक्तम् यथोक्तं तंत्रवार्तिककृता एतेन कर्त्रर्थकर्तृप्रतिपादनेनोपनिषदां नैराकांक्ष्यं व्याख्यातमिति न एकमे

वाद्वितीयं ब्रह्म विज्ञानमानंदं ब्रह्म अचक्षुरश्रोत्रमित्येवं तद्धि परीतात्मप्रतिपादनात् नन्वद्वितीयपरमानंदरूपस्य कर्मांगत्वं युज्यते अनुष्ठुमनंचैनद्वार्तिककृतः कथम् सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधार्यतामिति

तेनैवोक्तत्वात् एतदर्थमेव मननाय मुनयः पर्यटंतीत्युक्तम् तत्र नावत् द्वैतस्य सत्यत्वे प्रवेदध्येवं तद्वेदनु नसंभवतीति प्रश्नोत

राभ्यां मननेन तत्त्वावधारणप्रकारमाह सतइदमुत्थितं सदिति चोदिति इदं विश्वं धर्मि सदिति साध्यो धर्मः सतउत्पन्नत्वात् हे

तुः यद्यतउत्पन्नं तत्तदात्मकमेव दृष्टम् यथा कनकादुत्पन्नं कुंडलादि तदात्मकं तद्वदिति

यस्य वेदस्य यज्ञादिक्रियाप्रतिपादनपरत्वादतदर्थानां अक्रियार्थानां सोरोदीत् प्रजापतिरात्मनो वपामुदखिदत् वायुर्वै क्षेपिष्ठा देवतेत्यादीनां वाक्यानामानर्थक्यं निरर्थकत्वं तस्मादनित्यमनियतं वेदस्य प्रामाण्यमुच्यत इति एवं प्राप्ते सिद्धांतसूत्रं विधिना त्वेकवाक्यत्वादिति अथ प्रथमपादस्थतद्भूताधिकरणस्य सूत्रं तद्भूतानां क्रियार्थेन समन्वय इति तत्तत्तेषु भूतानां सिद्धार्थप्रतिपादकानां वाक्यानां क्रियार्थेन क्रियाप्रतिपादकेन वाक्येन रज्जतं नदेयं पशुना यजेत श्वेतमालभेतेत्यादिना सहान्वयः तथा च विधिप्रत्ययरहितवाक्यानां विधिवाक्यैः सन्निहितैर्दूरस्थैर्वा सह विधिवाक्याकांक्षितनिंदितप्राशस्त्याद्यर्थपूरणेनान्वयेक्ते सर्वस्य वेदस्य क्रियापरत्वसिद्ध्या निरर्थकत्वनिरासेन प्रामाण्यं सिद्धं अध्ययनविधिपरिगृहीते सर्वस्मिन्वेदेकस्यापि वाक्यस्यानर्थक्यासंभवात् निरर्थकाध्ययनविध्यनुपपत्तेरित्यर्थः उपनिषदामपि तत्त्वमसीत्यादिवाक्यानामपि तदेवाभि

धिवाक्यान्वितत्वमेवयुक्तं स्तवेनेति क्रियारहितवाक्यानांक्रियान्वयाकांक्षावत्वेनांक्रियापरवाक्यापेक्षितार्थबोधनेननिराकांक्षत्वमितिन्यायेनोपनिष
दांतत्वमस्यादिवाक्यानामपि कर्तृत्वयोपयज्ञांगभूतोयः कर्तायजमानस्तस्यप्रतिपादनमीश्वराभेदेनस्तुत्यानिरूपणंतेनतैराकांक्ष्यंक्रियान्वयेनक्रिया
कांक्षा रहितत्वंव्याख्यानं स्पष्टीकृतंवेदितव्यमित्यर्थः आदित्योयूप इत्यादिवाक्यैःसूर्यत्वादिनायूपादिस्तूयतेसचपशुनियोजनादिनाक्रियास्वन्वेति
एवमीश्वराभेदबोधकैःकर्तृनिष्ठाक्यैर्यजमानःस्तूयतेसचकर्तृत्वेनक्रियास्वन्वेतीतिभावः श्लोकाद्बहिरेवसिद्धांतमाह नेति नत्वद्वितीयेनिस्तु
निर्दिशीयमनस्यर्थ अद्वितीयत्वबोधेनुस्वर्गादिभोग्यभोक्त्रादिद्वैतस्यकरणकर्मसंप्रदानादिकारकद्वैतस्यचबाधान्नप्रवृत्तिः एवंपरमानंदरू
पत्वबोधेस्फुटस्वर्गानंदाद्यर्थंनप्रवृत्तिः तथाचक्षुरादींद्रियरहितत्वबोधेंधबधिरादितुल्यत्वापत्त्याकर्तृत्वभोक्तृत्वासंभवान्नप्रवृत्तिःसिध्येदि
तिभावः सर्वत्रैवबहिर्विज्ञानमिति सर्वत्रवेदेविज्ञानंतत्तद्वाक्यजन्यंद्रव्यदेवताकर्मादिविषयंज्ञानंसंस्कारत्वेनज्ञायतेसंस्काररूपंभवति अत
एवव्रीह्यादिषुप्रोक्षणावघातादिसंस्कारवत्तरस्यपागादेरंगंचगम्यते एवंहिकर्ममीमांसकसिद्धांतः स्वाध्यायोध्येतव्यइतिविहितस्यवेदाध्य

तत्रपदिसद्भेदः स्वाध्यनेनदापादानत्वनिर्देशेनैवभेदप्रतीतेर्विरुद्धोहेतुरित्याह ननुनर्केहतमिति ननुनाभेदंसाधयामः किंतुतद्
सन्मत्वेनकुंडलादिवद्वैतंप्रतिषेधयामः तत्रअभेदएवस्यादित्याशंक्यानैकांतिकत्वेनदूषयति व्यभिचरतिच्वेति पितृपुत्रा
दिषुसुद्गरघटप्रध्वंसादिषुचतथादर्शनादितिभावः ननुतदुत्सन्मत्वंनामतदुपादानत्वंनतुतन्निमित्तत्वमतोनानैकांतिकत्वमित्याशंक्य
दूषयति स्वमृषेतिगुणोपादानस्यापिफणितोनगुणत्वंकिंतुमिथ्यात्वम् अन्यथाकुंडलादिवद्बाधप्रसंगात् अतःपुनरपिभ

यनस्यवेदार्थज्ञानंफलंनतुस्वर्गादि दृष्टेफलेसंभवत्यदृष्टकल्पनायाअन्याय्यत्वात् अवघातादेरिवतुषविमोकादि तच्चद्रव्यदेवतादिविषयकं
वेदाध्ययनेनसंपाद्यंज्ञानंपौरुषवाक्यादिनापिस्यादितिपुनरध्ययनवैफल्येप्राप्तेवेदाध्ययनेनैवदेवतादिज्ञानंसंपाद्यमितिनियमःस्वीकार्यः नखवि
दलनादिनापिवैतुष्येसिद्धेऽवहन्त्यादेवेतिनियमवत् तथाचयथावघातेनवैतुष्येकृतेतंडुलेषुकश्चनसंस्कारोभवतितसन खदलनादिना
तथावेदाध्ययनेनद्रव्यदेवतादिविषयकज्ञानेसंपादितेद्रव्यदेवतादिषुतादृशाज्ञानजन्यःकश्चनसंस्कारउत्पद्यतेनतसंस्कृतदेवतादिस्मरणा
दिनास्वर्गाद्यपूर्वसिद्धिर्नतुपौरुषवाक्यादिजन्यज्ञानेन एवंयागकालेपठ्यमानमंत्राणामपिदेवताकर्मादिविषयंज्ञानमेवदृष्टफलं नत्वदृष्ट
मपूर्वं अत्रापिपूर्ववत् स्मृत्यादिनाज्ञानसिद्धौनियमविधिनासंस्काररूपत्वकल्पनंपूर्ववत् एवंचसर्वत्रवेदेजायमानंज्ञानंसंस्काररूपंसिद्धं
संस्कारस्यचस्वतःफलवत्वाभावात् फलवतोयागस्यांगत्वमितिपरांगत्वंचसिद्धं आत्मविज्ञानादन्यत्रेति उपनिषज्जन्यात्मविज्ञानंविनाउप २२
निषज्जन्यात्मज्ञानंसंस्काररूपंयज्ञादिकर्मांगंचनेत्यर्थः उपनिषज्जज्ञातृज्ञानस्यकर्मांगत्वाभावात्कर्मकर्त्र्यजमानेनोपनिषद्विचा-

गोनकार्यइतिभावः नचोपनिषद्ज्ञानस्यकर्मांगत्वेस्वर्गातिरिक्तमोक्षानंगीकारात्सर्वशाखाग तोपनिषद्भागवैय्यर्थ्यमितिवाच्यं देहात्मभ्रांति
मतांजन्मांतरभोग्यस्वर्गादिफलककर्मसुप्रवृत्त्यभावेप्रासेन ज्ञांतिनिरासार्थमुपनिषदामवश्यकत्वात् देहाद्यात्मभ्रांतिरहितंयजमानविशेषंप्रत्युपनिष
द्वैयर्थ्यमिष्टमेव अतएवोपनिषद्ज्ञानंनांगं अंगंहिनियतंनत्वपाक्षिकं यथावघातादि औपनिषदात्मज्ञानंतुभ्रांतिमत्पुरुषंप्रत्येवोपयुक्तं नसर्वं
प्रतीतिपाक्षिकमितिनतस्यकर्मांगत्वमितिवार्तिकाशयः एवंनदुक्त्यैवात्मज्ञानस्यसंस्कारत्वांगत्वाभावेसिद्धे क्रियापरत्वमप्युपनिषदांमास्तुफलवद
ज्ञानार्थकत्वेनस्वार्थपरत्वोपपत्तिरितिसिद्धांत्याशयः यत्तुकेचनमीमांसकाःपत्न्यवेक्षितमाज्यंभवतीतिपत्न्याः पाशुयागेउपयोक्ष्यमाणाज्यस्यपत्नीक
र्तृकचाक्षुषज्ञानंसंस्कारएवंयागंकरिष्यतःपुंसोहंब्रह्मास्मीत्यौपनिषद्वाक्यानुसारेणावेक्षणंसंस्कारइतिसंकल्पयंतिएतत्शारीरकभाष्येएवाना
रभ्याधीतस्यात्मज्ञानस्ययज्ञकर्तृसंस्कारतयांगत्वंनयुज्यतइत्यादिनाविस्तरेणदूषितंनतएवद्रष्टव्यं पूर्वश्लोकेनसंगत्यर्थमाह एतदर्थमेवेति
नक्रियापरत्वेनैवसर्वस्यवाक्यस्यप्रामाण्यंकिंतुफलवद्ज्ञानाबाधितार्थपरत्वेनैव कूपसंसुरंगछन्नपमंधः कूपेपतेदितिवाक्यानांविधिनिषेधर
हितानामपिप्रामाण्यदर्शनादित्यादिनिश्चयस्यबहुमननंविनादुर्घटत्वादितिभावः एवंश्लोकाभ्यांहरिरेवमीमांसकपूर्वपक्षंनिरस्यमननप्रकारां
तरेणश्लोकाक्षरैरपिनिरसितुमाह नत्वनादिति द्वैतस्यभोक्तृत्वभोग्यरूपस्यकर्तृक्रियाकारकरूपस्यचसत्यत्वेअबाध्यत्वेएवस्वर्गादिफल
कस्यकर्मणः परमपुरुषार्थहेतुत्वेनसर्ववेदस्यक्रियापरत्वंभवेदपि द्वैतस्यसत्यत्वमेवतुनसंभवतीतिप्रकारांतरेणानिवृत्तिपरत्वरूपवेदत
त्वनिश्चयायप्रश्नोत्तराभ्यांमननंदर्शयतीत्यर्थः इदंपदोक्तंविश्वंधर्मिपक्षः सदितिसाध्यं सतउत्थितमिति हेतुगर्भितंविशेषणमितिसतउ
त्पन्नत्वादितिहेतुः फलति ननुमीमांसकमतेआकाशादेः स्वर्गादेश्चोत्पत्त्यभावादुत्पत्तिमत्तामपिकेषांचिद्भोग्यजातानांब्रह्मणउत्पत्त्यनंगीकारा
त्कथमिदमनुमानंमीमांसकानामुभयवादिसिद्धहेत्वभावादितिचेन्न घटपटादिमात्रसिद्धस्यार्थस्यहेतुकरणदर्शनाद्वेदांतिमतासिद्ध
मेवसतउत्पन्नत्वंहेतूकृत्यैतत्पूर्वपक्षोत्थानात् अत्रसिद्धांती किंविश्वंसदित्यनेनविश्वंसदभिन्नंसतउत्पन्नत्वादितिसद्भेदः साध्यतेकिंवाविश्वं
सद्भिन्नंनेतिसप्रतियोगिकभेदाभावः साध्यतेइतिविकल्प्यमनसिनिधायप्रथमपक्षेदूषणमाह नत्वपदिसद्भेदइति ननुअभेदोभेदाभावश्चै
कएवनभेदअभेदइतिनञोभावार्थकत्वादितिचेन्न असुराधर्मादिपदेष्विवनञोविरोधार्थकत्वात्सुरविरोधीअसुराःधर्मविरोधीचाधर्मो
भावरूपीतिवदिहविरोधीअभेदः कश्चनस्वरूपसंबंधविशेषस्तत्साधनेचसर्वदास्वरूपैक्यसिद्धिरित्यभ्युपगमात् विरोधश्चभेदाभेदयोस्ते
जस्तिमिरयोरिवसहानवस्थानलक्षणइतिसतउत्पन्नत्वादित्यपादानकारकनिर्देशेनजगतिसप्रतियोगिकभेदप्रतीतौनत्वाभेदप्रतीतिरितिजाय
नइतिविरुद्धोहेतुः नहिवेदांतिमतेभावरूपस्यापितमसस्तेजःप्रतीत्यधिकरणेप्रतीतिर्भवतीत्याशयेनाह विरुद्धोहेतुरिति तर्कहतमिति

भेदप्रत्यायकेनहेतुनाअभेदप्रत्यायकंयुक्तिबाधितमित्यर्थः द्वितीयंपक्षमनुवदति ननुनाभेदमिति तत्राभेदएवेति सद्भेदनिषेधेजगतिसत्य-
त्वमेवसिध्येदित्यर्थः नचात्पक्षेउ पादाननिर्देशेनजाताभेदप्रतीतिर्भेदनिषेधस्यविरोधिनीतिशंक्यं यथाकनकादुत्पन्नंकुंडलमित्यत्रापादा-
नत्वेनकार्यत्वेनचजाताभेदप्रतीतिः कनककुंडलयोः सुवर्णत्वेनभेदनिषेधसाधनेविरुद्धानभवतितथासतउत्पन्नत्वादित्यनेनकार्यत्वेनकारणत्वे
नचजाताभेदप्रतीतिःसत्त्वेनरूपेणसत्कारणजगत्कार्ययोर्भेदनिषेधसाधनेविरुद्धानेत्याशयात् अभेदसाधनेचसर्वथैक्यसिद्धौकार्यत्व
कारणत्वरूपभेदोपिविरुद्धइतिनत्वविरुद्धोहेतुरितियुक्तमुक्तमितिदिक् अनैकांतिकत्वेनेति सव्यभिचारोनैकांतिकइतिपंचविधहेत्वाभासांतर्ग
तप्रथमहेत्वाभासत्वेनदूषयतीत्यर्थः सद्धेतुनाहिसाध्यसिद्धिर्नत्वसद्धेत्वाख्यहेत्वाभासेन सद्धेतुत्वंचसव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबा
धितेतिपंचविधहेत्वाभासभिन्नत्वं व्यभिचरतिकचेति हेतुसत्वेसाध्यासत्वंव्यभिचारः यथापर्वतोवन्हिमान्द्रव्यत्वादित्यत्रद्रव्यत्वंजला-
दौनत्रसाध्यस्यवन्हेरभावाद्व्यभिचारः तथाविध्वंसाद्भिन्नंनसतउत्पन्नत्वात् यत्यतउत्पन्नंततनोभिन्नंनयथाकनकादुत्पन्नंकुंडलंकन
कान्नभिन्नमितिसामान्यमुख्यव्याप्तौपितुरुत्पन्नेपुत्रेदंडप्रहारादुत्पन्नेघटादिप्रध्वंसेचततउत्पन्नत्वरूपहेतुसत्वेपिभेदाभावरूपसाध्यासत्वा
द्व्यभिचारः क्षत्रियादेर्देवदत्ताद्ब्राह्मण्यादौजातेयज्ञदत्तेक्षत्रियत्वसूतत्वादिनादेवदत्तत्वयज्ञदत्तत्वादिनाचभेदात् मुद्गरघटध्वंसादेर्मा
वत्वादिनाभेदात् नन्वत्रापिमनुष्यत्वादिनाभिधेयत्वादिनाचभेदोनेतिचेत् जगतिमिथ्यात्वसत्वेपिभास्मानत्वादिनाभेदनिषेधसंभवान्न
सत्यत्वसिद्धिः भासमानत्वंहिस्फुरतीत्यादिमतिन्यास्पदत्वरूपंघटादिजगतिब्रह्मणिचास्तीतिगूढाशयः ननुविध्वंसनोभिन्नंसदुपादानक
त्वात्यद्यदुपादानकंततततोनभिन्नमितिविवक्षणेपुत्रेपितुःप्रध्वंसेमुद्गरस्यचनिमित्तत्वेनोपादानत्वाभावात्तदुपादानकत्वहेतोरसत्वान्नव्यभिचार
इतिशंकते नन्विति गुणोपादानस्येति रज्ज्वारोपितत्वेनरज्जूपादानकेसर्पेव्यभिचारः रज्ज्वाव्यावहारिकसत्यत्वात्सर्पस्यमिथ्यात्वेनतद्भेदा-
दित्यर्थः अन्यथासर्पस्यव्यावहारिकसत्यत्वेबाधोनस्यात् ननुसदुपादानत्वपदेनसन्मात्रोपादानकत्वंविवक्ष्यते तथाचयन्मात्रोपादानकं
यत्ततनोनभिन्नमितिव्याप्तेर्नरज्जुसर्पेव्यभिचारः रज्जुसर्पस्याज्ञानयुक्तरज्जूपादानकत्वेनरज्जुमात्रोपादानकत्वाभावान्मिथ्यात्वंयुक्तमिति
शंकते ननुनत्रेति तुल्यमत्रापीति अविद्यायुक्तसद्ब्रह्मणउपादानत्वात्सन्मात्रोपादानत्वंहेतुर्जगतिस्वरूपासिद्धइतिजगतोमिथ्यात्वमेव
युक्तमित्यर्थः ननथोभययुगिति उभाभ्यांसदविद्याभ्यांकारणाभ्यांयुक्तमिदंजगत् अतःसन्मात्रोपादानकत्वहेतोरसिद्धेरपितथात्वस
त्यंनेत्यर्थः ननुसदेवसौम्येदमग्रआसीदितिसन्मात्रोपादानत्वश्रुतेर्मास्त्वविद्येतिशंकायामाह अयमर्थइति अविद्यायुक्तस्यैवेति
देवात्मशक्तिंस्वगुणैर्निगूढामित्यविद्यायुक्तत्वश्रवणादविद्यानंगीकारेविवर्तवादासंभवेनब्रह्मणोपिविकारित्वसंभवाच्चेतिभावः अर्थ

क्रियाकारित्वादिति अर्थप्रयोजनमुदकाहरणादितस्यक्रियानिर्वाहः तथाचघटस्य सत् ततत्प्रयोजननिर्वाहकारित्वात् यत्सत्त्वंतत्प्रयोज
ननिर्वाहकंतथाशुक्तिरजतादीत्यर्थः कूटकर्षापणेति कूटमविकारिखंडरहितंयत्कार्षापणंषोडशमाषादिपरिमितंसुवर्णमुद्रादितेनाखंडनाविपा
दादिभागारोपेणक्रयादिव्यवहारदर्शनात् आदिपदेनस्वप्नांगनासर्पादिनासत्यस्यसुखभयादेर्भाविशुभाशुभज्ञानस्यचदर्शनंशंकाविषादिनामरणादिकं
गृह्यते नन्वेकत्वेति हट्टपत्तनादौबिलादौचसत्यस्यरजतसर्पादेरस्यशुक्तिरज्ज्वादावारोपोभ्रमः प्रपंचस्यानारोपितस्यब्रह्मणोन्यत्राधिष्ठानेसत्तित्वे
नैकांतिकत्वमेवेतिभावः ननुनतत्रकेवलंगुणमात्रंफणिनउपादानंकिंतुअविद्यायुक्तंतथाभूतस्यावस्तुत्वाद्युक्तंफणिनोमिथ्या-
त्वमित्याशंक्यतत्तुल्यमत्रापीतिदूषयति नतथोभययुगिति अयमर्थः अत्राप्यविद्यायुक्तस्यैवसतउपादानत्वम्. एवंभू-
तस्यचनवस्तुसत्त्वम् अतःसदुपादानत्वमसिद्धमितिनवस्तुसत्त्वंप्रपंचस्येति ननुमाभूदनेनहेतुनाप्रपंचस्यसत्त्वंहेत्वंतर-
णतुसाधयामःतथाहिसदिदमर्थक्रियाकारित्वात् तथपदेवंतत्तदेवंयथाशुक्तिरजतमितितत्राह व्यवहृतयेविकल्पइषितइति

सतइदमुत्थितंसदितिचेन्ननुतर्कहतंव्यभिचरतिक्वचक्वचमृषानतथोभययुक् ७.

व्यवहारायअर्थक्रियार्थंविकल्पोभ्रमइषितइष्टएव कूटकार्षापणादिनापिकचिद्व्यवहारदर्शनात् नन्वेकत्वसतोन्यत्रारो
पोभ्रमःप्रसिद्धः अत्यंतासत्त्वेकथंप्रपंचोभ्रमःस्यात्सत्त्वेवानाद्वैतसिद्धिःउक्तंचभट्टैः अध्यस्यतेखपुष्पत्वमसत्कथमव
स्तुनि अज्ञातगुणसत्ताकमध्यारोप्येतवानवेति तत्राह अंधपरंपरयेति अंधपरंपरयायोविकल्पइत्यन्वयः अयंभावः
संस्कारजन्योभ्रमःसंस्कारसिद्धयेपूर्वप्रतीतिमात्रमपेक्षतेनवस्तुसत्त्वम् प्रतीतेरसत्यावस्तुसत्त्वाभावेनभ्रमव्यति
रेकदर्शनात् अतो।नादित्वात्पूर्वपूर्वभ्रमदृष्टस्योत्तरोत्तरंआरोपोभविष्यति
तापत्तिः असत्त्वेनस्यखपुष्पतुल्यत्वेनकथंब्रह्मणितदारोपइत्यर्थः अत्यंतासतोत्यंतासत्यधिष्ठानेवारोपोनेत्यत्रभाट्टवार्तिकमाह अध्यस्य
तइति असत्त्वाप्यदृष्टंखपुष्पंकथमध्यस्यते अवस्तुनिअत्यंतासत्यधिष्ठानेवाकथंरजतादिकमध्यस्यते नकथमपीत्यर्थः उत्तरार्धंप्रथमंवापदंचा
र्थमज्ञातोनुभूतोगुणोरूपादिःसत्तासद्भावश्चयस्यतत्तत्ज्ञातगुणसत्ताकंरजतादिकंचार्थकवापदेनअज्ञातोगुणश्चाकचक्यादिःसामान्यधर्मःस
त्तापुरोवर्तित्वादिकंचयस्यतस्मिन्नधिष्ठानेचाध्यारोप्यते करणदोषविषयदोषेंद्रियसंप्रयोगादिकरणसामग्र्यभावेतुनवारोप्यते अज्ञातगुण
सत्ताकमेववस्त्वज्ञायमानगुणसत्ताकेएवाधिष्ठाने।ध्यारोप्यतइतिनियमद्वयं आरोप्यतएवेतितुननियमइत्यर्थः अन्यत्राधिष्ठानेत्यंतासतोजग

तोवाङ्मनसाद्यगोचरेब्रह्मणिकथमारोपइतिभावः वस्तुसत्वंविषयसत्यत्वंनथाचभ्रमहेतुसंस्कारसिध्यर्थंयथार्थज्ञानंनापेक्ष्यते भ्रांतिज्ञानेना
पिसंस्कारसिध्यानादृशसंस्कारमात्रेणोत्तरत्रभ्रमसिद्धेरित्यर्थः यदभावेयदभावइतिव्यतिरेकनिश्चयेनकारणत्वनिश्चयः प्रकृतेव्यतिरेका-
दर्शनान्निवस्तुसत्वस्यभ्रमकारणत्वनिश्चयइत्याह प्रतीतोसत्त्वामिति वस्तुसत्वाभावेनविषयसत्यत्वाभावेनव्यतिरेकस्यभ्रमाभावस्यादर्शना
त्गुंजापुंजेवन्हिभ्रमाहितसंस्कारेणापिपुनस्तत्रैवगुंजापुंजादौभ्रमपरंपरादर्शनादित्यर्थः इंद्रियागोचरस्यापिब्रह्मणःस्वयंप्रकाशत्वेनस्फुरमाण-
त्वादारोपाधिष्ठानत्वंयुक्तं इंद्रियागोचरेपिनभसिसाक्षिभास्येनीलत्वमइत्यारोपदर्शनात् अधिष्ठानारोप्ययोरेकत्रज्ञानेस्फुरमाणमेवाध्यासव्या
पकंनतधिष्ठानस्येंद्रियगोचरत्वमारोप्यस्यवस्तुनःसत्यत्वंवाव्यापकंव्यभिचारादितिभावः अंधपरंपरान्यायेनेति इहवटेयक्षोस्तइतिकेनाचिदं
धेनांधउपदिष्टस्तेनान्यस्तेनान्यइतिपरंपरायांयक्षभ्रमः पूर्वपूर्वभ्रमजन्यएवनकस्यचिद्यक्षप्रमानेनचमूर्छामरणाद्यर्थक्रियापिदृश्यतेनद्व

अंधपरंपरान्यायेनव्यवहारःसत्यनीत्यप्रयोजकोहेतुरितिनन्वक्षय्यंहवैचातुर्मास्ययाजिनःसुकृतंभवति अपाम
सोमममृताअभूमेत्यादिभिः कर्मफलस्यनित्यत्वप्रतिपादनादसत्वंनघटतेनहिनित्यवस्तुअसद्भवति तस्माद्वेदप्रति
पादितत्वाद्द्वैतंसदेवेत्याशंक्याह भ्रमयतीति हेभगवन् तेभारतीवेदलक्षणाउरुवृत्तिभिर्बह्वीभिर्गौणलक्षणादिवृ

व्यवहृतयेविकल्पइषितोंधपरंपरयाभ्रमयतिभारतीतउरुवृत्तिभिरुक्थजडान् ३६

त्तिभिरुक्थजडान्कर्मश्रद्धाभराक्रांतमंदमतीन्भ्रमयतिमोहयति अयंभावः नहिवेदःकर्मफलंनित्यमभिप्रैतिकिं
तुलक्षणयाप्राशस्त्यमात्रंविध्येकवाक्यत्वात् अन्यथावाक्यभेदप्रसंगात् तद्यथेहकर्मचितोलोकः क्षीयतेएव
मेवामुत्रपुण्यचितोलोकःक्षीयतइतिन्यायोपबृंहितश्रुत्यंतरविरोधाच्च अतःकर्मजडानामिदंभ्रममात्रमिति एतेनै
वतस्माद्वाएतस्मादात्मनआकाशःसंभूतःइत्यादीनामप्यन्यपरत्वंदर्शितंभवति ३६ ६७

दित्यर्थः अप्रयोजकोहेतुरिति अर्थक्रियाकारित्वंहेतुरस्तुसत्यत्वंसाध्यमस्त्विव्यक्तेनुकूलतर्काभावात्साध्यनिश्चयस्यप्रयोजकः
कारणंनेत्यर्थः अक्षय्यमिति चातुर्मास्यनामकयागकर्तुःसुकृतंयागजनितंस्वर्गादिफलंभोगेनकालेनवाक्षय्येसुम श्वक्ष्यमनंतमलया
नर्गकारादित्यर्थः अपामेति सोमासंयागेवपिबामतेनचामृतानाशरहिताअनंतकालंस्वर्गभोक्तारोजाताः स्मेतिक्रमेणभोग्यभोक्तृद्वैतनित्य
त्वश्रुतिः लक्षणयेति यथाप्रजापतिरात्मनोवपामुदखिददितिवाक्येनस्ववपोत्खादनरूपस्वार्थपरित्यज्यजहल्लक्षणयापशुयागप्राश
स्त्यमात्रंबोध्यतएवमक्षय्यादिवाक्यैः स्वार्थत्यागेनचातुर्मास्ययागप्राशस्त्यमात्रमुच्यते नतुफलनित्यत्वमिति मीमांसकैःस्वार्थबोधन

पूर्वकविध्यन्वयस्यार्थवादेष्वनंगीकारात् सर्वथास्वार्थत्यागस्यैवांगीकारात् तदुक्तंभगवताजैमिनिना विधिनात्वेकवाक्यत्वात्स्तुत्यर्थेनविधिनास्यु
रिति तदाह विध्येकवाक्यत्वादिति सर्वविधिवाक्यैः शीघ्रमद्यगतिसिध्यर्थमेकरूपेणप्राशस्त्यबोधनमेवापेक्ष्यते फलनित्यत्वादिनानार्थापेक्षणेवैरू
प्यापातात् विध्यपेक्षितार्थबोधनेनैवविधिवाक्येनैकवाक्यत्वसिद्धिः अन्यथाविध्यपेक्षितप्राशस्त्यबोधनंविहायविध्यनपेक्षितस्वर्गादिनित्यत्वबोधनेवि
ध्येकवाक्यत्वासंभवेनवाक्यभेदः प्रसज्येत ननुदेवताधिकरणोक्तवेदांतसिद्धांते भूतार्थवादरूपाणामिंद्रो वृत्रायवज्रमुदयच्छदित्यादिवाक्यानांस्वार्थेपि
प्रामाण्यंस्वीकृतंतद्वदक्षय्यादिवाक्येष्वस्त्वितिशंकायामाह तद्यथेहेति यागादिपुण्यकर्मसंपादितः स्वर्गादिः क्षयिष्णुर्भवितुमर्हतिकर्मसंपादित
त्वात् कृष्यादिकर्मचितसस्यादिवदित्यनुमानगर्भितश्रुत्यंतरविरोधात् युक्तिरहितास्य श्रुतिर्गुणवादरूपैव विरोधेगुणवादः स्यादनुवादो
वधारिते भूतार्थवादस्तद्धानादित्युक्तेः गुणवादानुवादयोश्चनस्वार्थेप्रामाण्यमितिभावः ननु आत्मनआकाशःसंभूतइत्यादिसृष्ट्यादिश्रुतिभिरेवना

उद्भूतंभवतः सतोऽपिभुवनंसन्नैवसर्पःस्रजः कुर्वन्कार्यमपीहकूटकनकंवेदोऽपिनैवंपरः अद्वैतंनवसत्परंतुपरमानंदं
पदंतन्मुदावंदेसुंदरमिंदिरानुतहरेमामुंचमामाननम् २३ ७ ७ ७ ७

नाविधद्वैतप्रतिपादनात्कथंजगन्मिथ्येत्याशंकायामाह एतेनेति अन्यपरत्वमिति नेहनानास्तिकिंचन अथातआदेशोनेतिनेति अस्थूलमनणु
इत्यादिनिषेधवाक्यापेक्षितनिषेध्यसमर्पकत्वंसृष्टिवाक्यानां अथवाब्रह्मणिप्रपंचनिषेधेन्यत्रसत्त्वशंकास्यात् ब्रह्मोपादानत्वेन्यथाउपादानादन्यत्र
कार्यसत्तानिषेधोसिद्धः ब्रह्मण्यपितन्निषेधेनिःशंकमद्वैतसिद्धिरितिसृष्टिश्रुतिभिः सर्वप्रपंचस्यब्रह्मोपादानकत्वंश्राव्यतइत्यद्वैतपरत्वमेवसृष्टि
श्रुतीनामित्यर्थः उद्भूतमिति सद्रूपादपिभवतउत्पन्नंविश्वं सन्नैवसत्यंनैव यथास्रजव्यावहारिकसत्यायाः उत्पन्नः सर्पोव्यावहारिकसत्योन
किंतुमिथ्यैव कूटस्वर्णकार्यमर्थक्रियांकुर्वदपिभवति नतोर्थक्रियाकारित्वेनापिहेतुनाविश्वंसत्यं अक्षय्यादिवाक्यरूपः सृष्ट्यादिवाक्यरूप
श्ववेदोपिएवंपरः विश्वसत्यत्वपरोन ततएवसर्वोवेदः क्रियापरइत्यपिनेतिभावः एवमद्वैतेपरमार्थिकेपिसतिभक्तसेव्यसेवकभावादिद्वैतंकल्प
नयाभजे त्वमपिमामामुंच नायंमाद्भक्तोनापिदुःखादिसंसारभाक्स्वतन्द्रष्टेवमिथ्यैवाक्रोशकारीत्यद्वैतदृष्ट्यामांनोपेक्षस्वेत्यर्थः २३ ३६

 

मृल्लोहकार्ष्णायसेति मृत्तिकासुवर्णायोरूपाणामित्यर्थः यथासोम्येति एकेनकारणभूतेनमृत्पिंडेनविज्ञातेनसर्वंतत्कार्यं घटशरावादिविज्ञातंस्यात् कथमितिचेत्तत्राह वाचारंभणमिति नामधेयंनामैव यद्यदिविकारः केवलं नामैव अनस्तद्वाचारंभणंवाचैवकेवलमारभ्यते व्यवह्रियते वा गारभ्यंनामातिरिक्तविकारः सत्योनास्त्येवमृत्तिकेवसत्यं वस्तुसत्यर्थः लोहमणिनासुवर्णपिंडेन नखनिकृंतनादिनाकार्ष्णायसपिंडेनवि:::

नदेवंप्रपंचस्यसत्वेसाधकंनास्तीत्युक्तम् इदानीमसत्वेसृष्टिप्रलय श्रुतयोयतोवाइमानिभूतानिजायंतेइत्याद्यास्तन्मूलंचानुमानं प्रमाणमित्याह नयदिदमितिपद्यस्मात् इदंविश्वमग्रेसृष्टेःपूर्वंन आसन आसीत् सदेवसौम्येदमग्रआसीत् आत्मावाइदमेक एवाग्रआसीदित्यादिश्रुतेः नचानिधनात्प्रलयात् अनुअनंतरं भविष्यत् भविष्यति नासदासीन्नोसदासीत्तदानीमित्यादिश्रुतेः अतःकारणात् अंतरामध्येऽपिएकरसेकेवलेत्वयिमृषामिथ्यारूपमेवविभातीतिमितंनिश्चितम् यतएवमतःश्रुत्याद्रविणजातिविकल्पपथैःद्रविणजातीनांद्रव्यमात्राणांमृल्लोहकार्ष्णायसरूपाणांविकल्पाभेदाघटकुंडलादयःतेषांपंथानोमार्गाःप्रकारास्तैरुपमीयतेसदृशतयानिरूप्यतेयथातत्रकार्यकारणानांनामधेयमात्रताकारणंमृदाद्येववस्तुसत्यम् तथाऽत्राप्याकाशादीनांनाममात्रता

**नयदिदमग्रआसनभविष्यदतोनिधनादनुमितमंतरात्वयिविभातिमृषैकरसे अतउपमीयतेद्रविणजातिविकल्पपथैर्वितथमनोविलासमृतमित्यवयंत्यबुधाः ३७** ७ ७ ७

ब्रह्मैवसत्यम् तथाचश्रुतिः यथासोम्यैकेनमृत्पिंडेनसर्वंमृन्मयंविज्ञातंभवतिवाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यम् यथाएकेनलोहमणिनासर्वंलोहमयंविज्ञातंस्यात् यथाएकेननखनिकृंतनेनसर्वंकार्ष्णायसमित्यादितस्माद्स्यसत्वेप्रमाणाभावादसत्वेप्रमाणस्यविद्यमानत्वात् वितथमनोविलासमृतंसत्यमितियेऽवयंतिजानंतितेअबुधाः अज्ञाइत्यर्थः अत्रैवंप्रयोगःविवादाध्यासितंनसत् आद्यंतयोरविद्यमानत्वात् विकारित्वाद्दृश्यत्वाच्चशुक्तिरजतादिवत् इत्यन्वयदृष्टांतः आत्मवच्चेतिव्यतिरेकदृष्टांतः ३७ मुकुटकुंडलकंकणकिंकिणीपरिणतंकनकंपरमार्थतः महदहंकृतिखप्रमुखंतथानरहरेनपरंपरमार्थतः २४ श्रीकृष्णार्पणमस्तु ७ ७ ७

ज्ञानेनतद्विकारभूतछुरिकादिविज्ञातमित्यादि विवादाध्यासितं सत्यंवामिथ्यावेतिविवादविषयीभूतंविश्वंनसत्यंआद्यंतयोरविद्यमानत्वादित्यादिपृथग्हेतुत्रयं अन्वयेशुक्तिरजतादिवत्व्यतिरेकेआत्मवदितिज्ञेयं मुकुटेति मुकुटादिरूपेणपरिणतंविकारभावंप्राप्तंसर्वंपरमार्थतः कनकमेवेत्यर्थः २४ ३७ ७ ७ ७

सयदजया द्वासुपर्णेति द्वावुभौजीवेश्वरौसुपर्णासुपर्णौशोभनगमनवंतौसयुजौयोयंप्रतिबिंबभावेननित्यसंयुक्तौसखायौउपकार्योपकारक भावेनवर्तमानौ यद्वानित्यत्वेनसमानस्वभावौ समानमेकंवृक्षंवृश्च्यतेछेद्यतेइतिनाशवत्वेनवाप्रियाप्रियादिबहुफलवत्वपुण्यापुण्यादि बहुबीजवत्वादिनावाद्वृक्षसदृशंशरीरंपरिषस्वजातेभोक्तृत्वेननियामकत्वेनचैकंशरीरमाश्रितवंतावित्यर्थः तयोर्मध्ये अन्यः एकोदेहत्रयतना दात्म्याभिमानी अंतःकरणप्रतिबिंबोजीवः पिप्पलंकर्मफलंसुखादिस्वादुयथातथा अत्तिभुंक्ते अन्यःनित्यमुक्तईश्वरःअनश्नन्कर्मफलम

ननुयदिप्रपंचानामनास्त्येवतदाः सतानेननचैतन्यस्यसंबंधगंधोपि तर्हिकिमपराद्धंजीवेनयतोऽयंसंसरति किंवाबहुपुण्यमीश्वरस्य यतोनित्यमुक्तः किंविषयंचतदाकर्मकांडमित्यपेक्षायांजीवेश्वरविशेषम् द्वासुपर्णासयुजासखायासमानंवृक्षंपरिषस्वजाते तयोरन्यः पिप्पलंस्वाद्वत्त्यनश्नन्नन्योअभिचाकशीति अजामेकांलोहितशुक्लकृष्णामित्याद्यावदंतीत्याह सयदजयेति सजीवः यद्यस्मात् अजयामायया अजामविद्यामनुशयीत आलिंगेत तांगुणांश्चदेहेंद्रियादीन्जुषन्सेवमानआत्मतयाअध्यस्यन् तदनुतदनंतरं सरूपतांतद्धर्मयोगंचजुषन् अपेतभगःपिहितानंदादिगुणः सन्मृत्युंसंसारंभजतिप्राप्नोतितर्हिविषयमेवचकर्मकांडमितिभावः त्व मुतत्वंतुजहासितामजांमायाम् ननुसाम्येवास्तिकथंत्यागस्तत्राह अहिरिवत्वचमितिअयंभावः यथाभुजंगःस्वगतमपिकंचुकं

**सयदजयात्वजामनुशयीतगुणांश्चजुषन्भजतिसरूपतांतदनुमृत्युमपेतभगः त्वमुतजहासितामहिरिवत्वचमात्तभगोमहसिमहीयसेऽष्टगुणितेऽपरिमेयभगः ३८ ७ ७**

गुणबुद्ध्यानाभिमन्यतेतथात्वमजामतहिनिरंतरास्त्राद्रसंधिनुकामधेनुवृंदपतेरत्नयाकृत्यमितितामुपेक्षसइतिकुतएतत्तत्राह आत्तभगःनित्यप्राप्तैश्वर्यः महसिपरमैश्वर्येअष्टगुणितेअणिमाद्यष्टविभूतीमतिमहीयसेविराजसेकथंभूतः अपरिमेयभगःअप रिमितैश्वर्यः नत्वन्येषामिवदेशकालादिपरिच्छिन्नंतत्राष्टगुणितमैश्वर्यं अपितुपरिपूर्णस्वरूपानुबंधित्वादपरिमितमित्यर्थः ३८ नृसंनीतवबीक्षणांगणगनाकालस्वभावादिभि र्भावान्सत्वरजस्तमोगुणमयानुन्मीलयंतीबहून् मामाक्रम्यपदाशिरस्यतिभरं संमर्दयंत्यातुरंमायानेशरणंगतोऽस्मिनृहरेत्वामेवतांवारय २५ ७ ७ १ मुंजानोपिअभिचाकशीतिस्वप्रका शचिद्रूपेणविराजतइत्यर्थः निरंतरेति निरंतरसततमात्म्यादिभ्यः आनंदिभ्यः संविदःस्वानंदस्फुरणानितान्येवकामधेनुवृंदानितेषांपत्युःपाल कस्यनित्यसंविदएकत्वेपिकालभेदेनबहुत्वव्यपदेशः वृंदानांपालनंचनित्यस्फूर्त्तस्वस्मिनसंरक्षणं अजयामायया श्लेषेण छाययातहित्वयितिति परिपूर्णस्वरूपानुबंधित्वादिति भगवतःसर्वप्रकारकैश्वर्यस्यगुणानांचतन्मुखादिविग्रहस्यचचिद्रूपत्वात्मायाकार्यताभावेननित्यस्वरूपभूतत्वादित्यर्थः

२५ ४

कामानिति कामान्विषयान्यःकामयतेप्रार्थयतेमन्यमानःदोषानभावयन्विषयगुणानेवचिंतयन्सः तैःकर्मभिःकामैःधर्माधर्मप्रवृत्तिहेतुविष
येच्छारूपैः सहतत्रतत्रयोनिषुविषयप्राप्तिनिमित्तंजायते कामाःकर्मरूपेरयंतितत्कर्मवशात्प्राप्तैरेवकामैर्वेष्टितस्तत्रतत्रजायतइत्यर्थः अ

एवंतावदुक्तसाधनकदंबेनयेभगवंतंभजंतितेमृत्युंतरंति इतरेसंसरंतीत्युक्तम् इदानींयेबहिःसंगंपरित्यज्यभगवन्मार्गेप्र
वृत्ताअपिकथंचिदंतर्वासनाशिनःकामान्नमुंचंतितेनभगवंतंप्राप्नुवंति नचेहसुखंलभंते केवलंकुयोनीरेवप्राप्नुवंतीति
तानुशोचन्कामान्यःकामयतेमन्यमानःसकर्मभिर्जायतेतत्रतत्रेत्यादिश्रुत्यर्थमाह यदिनसमुद्धरंतीति हेभगवन्
येयतयोहृदिस्थिताःकामजटाःकामस्यमूलानिवासनाः यदिनसमुद्धरंतिनोत्पाटयंतितेषामसतांभवान्हृदिगतोपिदुर
धिगमःदुष्प्रापःकथम् अस्मृतकंठमणिःविस्मृतोयःकंठमणिःतत्तुल्यःसयथाकंठेवर्तमानोप्यस्मृतश्चेदप्राप्तइवभवति तद्वदि

यदिनसमुद्धरंतियतयोहृदिकामजटादुरधिगमोसतांहृदिगतोऽस्मृतकंठमणिः असुतृपयो-
गिनामुभयतोऽप्यसुखंभगवन्ननपगतांतकादनधिरूढपदाद्भवतः ३९ ७ ७

तिनकेवलमेतावत् किंतुअसुतृपयोगिनामिंद्रियतर्पणपराणांयोगच्छद्मनामुभयतोऽप्यसुखमिहामुत्रचदुःखमेवत
दाह अनपगतांतकात् अनिवृत्तात्मृत्योःलोकाराधनधनार्जनादिक्लेशान् भोगवैभवप्राकट्यभयाच्चेहनावद्दुःखंभवत-
ईश्वरादपिदुःखंकथंभूतात् अनधिरूढपदात् अनधिरूढंपदंस्वरूपंयस्यतस्मात् तत्स्वरूपप्राप्त्यभावादविद्यावद्भिर्यत्नेनप्राप्त-
निजधर्मातिक्रमनिबंधनत्वदंडरूपनरकप्राप्तेरमुत्राप्यसुखमित्यर्थः ३९ दंभंन्याससमिषेणवंचितजनंभोगैकचिंतातुरं
संमुह्यंतमहर्निशंविरचितोद्योगक्लमैराकुलम् आज्ञालंघिनमज्ञमज्ञजननासंमाननासन्मदं दीनानाथदयानिधामपर
मानंदप्रभोपाहिमाम् २९

त्वदवगमी   एषइति ब्राह्मणस्यब्रह्मविदः महिमामाहात्म्यं नित्यएकरूपः यतः पुण्यकर्मणानवर्धते पापकर्मणाच्चकनीयान्क्षीणोन

नुयतेर्नकिमपिकृत्यमस्मिप्रारब्धमेवसुखोपभोगेनापक्षप्यते अतःकिमितिवृथाशप्यतेउभयतो ऽप्यसुरवगतिश्रूयतेच- एषनित्योमहिमाब्राह्मणस्यनकर्मणावर्धतेनोकनीयानित्यादितत्राह त्वदवगमीति हेसगुण षडैश्वर्ययुक्तत्वदवगमीत्वज्ज्ञान वान् भवदुत्थशुभाशुभयोः भवतः कर्मफलदातुरीश्वरान्हेतोरुत्थयोराविर्भूतयोः शुभाशुभयोः प्राचीनपुण्यापुण्यकर्मणोः फलभूतान्गुणविगुणान्वयान्सुखदुःखसंबंधान्नवेत्तिनानुसंधत्तेतर्हितदानींचदेहभृतांदेहाभिमानिनांमहतीनिशिकि रीर्गिरः विधिनिषेधलक्षणानवेत्तिविगतदेहाभिमानतयाकार्याकार्यबोधाभावान्ननियुज्यतइत्यर्थः युक्तंचैतत् यतःकार

**त्वदवगमीनवेत्तिभवदुत्थशुभाशुभयोर्गुणविगुणान्वयांस्तर्हिदेहभृतांचगिरः अनुयुगमन्वहं सगुणगीतपरंपरयाश्रवणभृतोयतस्त्वमपवर्गगतिर्मनुजैः ४० ७ ७**

णात्मनुजैरन्वहंश्रवणभृतः अनुदिनंश्रवणेनचेतसिधृतस्त्वंतेषामपवर्गगतिः अपवर्गरूपागतिर्भवसिकथंश्रवणभृतः- अनुयुगंप्रतियुगंयागीतपरंपराउपदेशसंततिः तयासत्संप्रदायानुसारेणेत्यर्थः एतदुक्तंभवति येतावत्तत्वज्ञानिनःतते- षांकर्माधिकारशंका ऽपियेचानवरतंत्वत्कथाश्रवणादिनिष्ठाः तेषामप्यासन्नभवसदानांनविधिनिषेधबाधःइतरेषां तुयोगच्छ्यनेंद्रियलालसानामुभयतोऽप्यसुखमिति ४० अवगमंतवमेदिशमाधवस्फुरतियन्नसुखासुखसंग मः श्रवणवर्णनभावमथापिवानहिभवामियथाविधिकिंकरः २७ ७ ७ ७

भवर्तानि २७ ४० ७ ७ ७ ७ ७

द्युपतयएवति सहोवाचयदूर्ध्वमिति सयाज्ञवल्क्यउवाच हेगार्गि यत्‌ब्रह्मादिब्रह्मांडकटाहादूर्ध्वमुपरि तत्रपृथिव्याअधस्तनांडकटाहादर्वा-क्‌अधः यच्चद्यावापृथिवीइमेअनयोर्द्यावापृथिव्योरंतरामध्येभूतमतीतंभवनवर्तमानंभविष्यत्‌वर्तमानादूर्ध्वकालभावियत्तत्‌सर्वयदधीनमाचक्षतइतियस्यांतरामध्येद्यावापृथिव्यौभूतवर्तमानादिसर्वंजगच्चेतिवा ब्रह्मन्‌ब्रह्मण्यनिर्देश्येइत्यत्रपूर्वपक्षोक्तंपदार्थस्यैववाक्यार्थत्वमितिनियमंशंकते कथंतर्हीति पदस्यलक्षणयाहत्यावाक्यावायोर्थःसवाक्येनबोधयितुंशक्यते यःकयापिवृत्त्यापदेननबोध्यःसकथंवाक्येनबोधत्वदवगमीनवेत्तिस्फुरवदुःखेनचाविधिनिषेधाविस्फुर्क्तं नत्रननुकथमवगंतुंशक्यते दुरधिगमत्वस्योक्तत्वात्‌इत्येवमाशंक्यसत्यमेवमनवगात्यमहिम्नोवाङ्मनसागोचरत्वादविषयत्वेनैवज्ञानमितिदर्शयन्‌यदूर्ध्वंगार्गिदिवोयदर्वाक्‌पृथिव्यायदंतराद्यावापृथिवीइमेयद्भूतंभवच्चभविष्यच्चेत्यादिश्रुतिप्रतिपादितमपरिमितमहिमानमाह द्युपतयएवेति हेभगवन्‌ते अंतंद्युपतयः स्वर्गादिलोकपतयोब्रह्मादयोनययुः नप्रापुः नकुतः यदंतवद्वस्तुतत्किमपित्वंनभवासि आस्तांद्युपतयोनययुरितियद्यस्मात्त्वमपिआत्मनोंतंनयासिकुतस्त्वर्हिसर्वज्ञतासर्वशक्तितावाभत आह अनंततयाअनंताभावेन नहिशशविषाणाज्ञानंसार्वज्ञंतदप्राप्तिर्वाशक्तिवैभ

द्युपतयएवतेनययुरंतमनंततयात्वमपियदंतराडंनिचयाननुसावरणाः

वंतिहेति अनंतत्वमेवाह यदंतरेति यस्यतव अंतरामध्येनतु अहोसावरणाःउत्तरोत्तरदशगुणसमावरणयुक्ताः अंडनिचयाब्रह्मांडसमूहाः वांतिपरिभ्रमंति वयसाकालचक्रेणाखेरजांसिवसहएकदैवनतुपर्यायेणहियस्मादेवमतः श्रुतयस्त्वयिफलंतिनात्पर्यवृत्त्यापर्यवस्यंतिनतुसाक्षाद्वदंति अयमेतात्रानिनिसगुणस्यगुणानंत्यात्‌निर्गुणस्यचागोचरत्वात्‌ कथंतत्वंपदार्थेतात्पर्यमिति

नीयइत्यर्थः वस्तुस्वरूपबोधकानिद्विविधानिवाक्यानि विधिमुखानिनिषेधमुखानिच तत्ररात्रौबृहत्तरप्रकाशवान्‌शीतद्युतिमंडलश्चंद्रइतिचंद्रस्वरूपबोधने विधिमुखंवाक्यं गगनगज्योतिःपूर्णाकरोननक्षत्राणि नडिनश्चनइतिनिषेधमुखं तत्रविधिमुखवाक्ये पूर्वपक्षोक्तनियमंमंगीकरोति

तत्रविधीति निषेधमुखवाक्येनियमभंगमाह निषेधेति उच्चाकरनमादिपदैश्चंद्रोनो-च्यतेतिनिषेधवाक्यस्थपदार्थोनत्वानितथापिनिषेधवा
क्यसमुदायेनलक्षणयाबोध्यनइतितदुक्तनियमस्यभंगइत्यर्थः अन्यदेवेतिविदितात् ज्ञानविषयादन्यत्भिन्नं अथोअपिअविदितादज्ञानवि
षयादपिअधिअन्यदित्यर्थः अन्यत्रेति धर्माधर्मास्पृष्टंकृताकृतात् कार्यकारणात्भिन्नंयदित्यर्थः अन्यत्रभूताच्चभव्याच्चयतत्पश्यसितद्वदेति
श्रुतिशेषः नन्वत्रान्यादिपदमेवनह्यवाचकमस्तुतत्राह अस्थूलमित्यादि आदिना अन्हस्वमदीर्घमलोहितमस्नेहमच्छायमतमोवागनाकाशम
संगमरसमगंधमचक्षुष्कमश्रोत्रमवागमनोतेजस्कमप्राणममुखममात्रमनंतरमबाह्यमित्यादि अथातआदेशोनेतिनेतीत्यादीनिगृह्यंते
तत्रविधिमुखवाक्येभवेदयंनियमः पदार्थस्यैववाक्यार्थत्वमितिनिषेधमुखेतुनायंनियमइत्याह अनन्निरसनेनेति अन्यदे
यनहिविदिताद्यो अविदितादधि अन्यत्रधर्मादन्यत्राधर्मात् अन्यत्रास्मात्कृताकृतात् अस्थूलमनण्वित्यादिप्रकारेणलक्षण
याचनतत्वमसीत्यादयःपर्यवस्यंति नचवाच्यं

## खइवरजांसिवांतिवयसासहयच्छ्रुतयस्त्वयिहिफलंत्यतन्निरसनेनभवन्निधनाः४१

निषेधैःशून्यमेवज्ञाप्यतइति यतोभवन्निधनाः भवनिलापिनिधनंभमाप्तियासांतास्तथा नहिनिरवधिर्निषेधःसंभवतिअ
तोवधिभूतेत्वयिफलंतीत्यर्थः ४१ द्युपतयोविदुरंतमनंतनेनच भवान्नगिरः श्रुतिमौलयः त्वयिफलंनियतोनम इत्यनोजय-
जयेतिभजेतवनत्पदम् २८ ६२ इतिवेदस्तुतेःश्रीधरीटीकासमाप्ता ६२ १ एवंनियमभंगाद्विधिमुखेष्वपि-
अखंडवाक्यलक्षणयापदार्थताभावेपिवाक्यबोध्यत्वंसंभवतीत्याशयेनाह लक्षणयातत्वमसीति लक्षणयेतिनिषेधमुखेष्वपिदृष्ट
व्यंएतद्धृदिप्रेतिश्लोकेउपपादितमित्यलं अंतर्यामीसर्वविन्दीननाथः श्रीमत्स्वामीविठ्ठलोदेवदेवः तेनैवाहंप्रेरितस्तत्रतत्रतंतंभाव
व्यक्तमाकार्षमित्थं १ नमीमांसाप्रवीणोहंनकाणादोक्तिपारगः पौर्वापर्यवानेकेषुश्रुतिभाष्याणिसर्वशः २ सम्यगेतानतनालो
च्याकुर्वव्याख्यांसुबोधिनीं श्रुतिस्तुतेःश्रीधरीयछनौतरक्षम्यतांबुधैः ३ इतिश्रीमदनंतोपाध्यायसूनुरिमांकृतिं कृत्वार्पयच्छ-
श्रीपदेकाशीनाथाभिधोद्विजः ४ इतिश्रीमदनंतोपाध्यायसूनुकाशीनाथोपाध्यायविरचिताचेदस्तुतिश्रीधरीयटीकाव्याख्यासमाप्ता

लात् अतोनिवृत्तिः परिसंख्यैवकथंतर्हिव्यवस्थितिरित्युक्तं उच्यतेइत्यादिः पाठांतरंलेखकप्रमादः ननुविधिविषयेष्ववश्यानुष्ठेयत्वदर्शना सद्वृत्तिरेवोचितातत्कथंसिद्धांती छापिनीवृत्तिः संभवतीत्याशंकायामाह अयंभावः इति कथंतर्हिती परिसंख्याविध्यंगीकारेव्यवस्थिति पदोक्तनियमविधित्यागापत्त्याव्यवस्थितिपदेननियमविध्यंगीकारवैय्यर्थ्यमित्यर्थः उपलक्षणमेतत् परिसंख्याविध्यंगीकारेपिपरिसंख्यावि धिविषयेष्वाज्यभागाश्वरशनादानादिषु अवश्यानुष्ठेयत्वदर्शनात्सिधांतीष्टायाः निवृत्तेरसंभवेनपूर्वपक्षोक्तदोषनादवस्थ्यस्याप्युपलक्षणी यत्वात् दोषद्वयस्यापिपरिहारंप्रतिजानीते उच्यतइति स्वतंत्रःपरिसंख्याविधिः क्वापिनांगीक्रियतेकिंतुक्वचिदपूर्वविधिद्वारकःक्वचिन्निय

अयंभावः नायंनियमविधिरपिनित्यप्राप्तत्वात् अतोनिवृत्तिः परिसंख्यैव आसक्त्यवायामिषमद्यसेवासुनिवृत्तिरिष्टा कथंतर्हिव्यवस्थितिरित्युक्तं उच्यते नतावत्परिसंख्याविधिनाश्रुत्यानिवृत्तिरित्युच्यते तथासति स्वार्थत्यागप्राप्त बाधपरार्थकल्पनाचेतिदोषत्रयंस्यात् अतः क्वचित्प्राप्स्यतोप्यर्थस्यप्रापणमनर्थकमित्यपूर्वविधिद्वारान्यनिवृत्तिः-

## व्यवस्थितिस्तेषुविवाहयज्ञसुराग्रहैरासुनिवृत्तिरिष्टा

फलतोभवति इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्तइत्यत्ररशनालिंगतोगर्दभाश्वाभिधानीरशनाद्वारा प्राप्यतोमंत्रस्यापूर्वविधिद्वारापरिसंख्योच्यते

मविधिद्वारकइति प्रकृतेतुनियमविधिद्वारकः परिसंख्याविधिरिति विधिद्वयोक्तेरप्यविरोधेनस्वीकृतपरित्यागादुक्तदोषासंभवः अपूर्वविधि द्वारकपरिसंख्याविधावेवविधेयस्यावश्यानुष्ठेयत्वंनियमविधिद्वारकपरिसंख्यायांतुविधेयस्यावश्यानुष्ठेयत्वाभावात् अथवाप्रपक्षप्रापकस्य नित्यप्रापकस्यचप्रमाणस्यशाश्वतत्वेविधेयस्यावश्यानुष्ठेयत्वं तस्यानित्यत्वेतुनविधेयस्यावश्यानुष्ठेयत्वमिति सिद्धांतीष्टापिनिवृत्तिरुपिसंभ वतीतिदोषद्वयसमाधिरुच्यतेइत्यर्थः प्रतिज्ञातमर्थंसहेतुकंसोदाहरणंसप्रमाणंउपपादयितुमुपक्रमते नतावदित्यादिना परिसंख्या- विधिनेतिकर्तरितृतीया श्रुत्येतिकरणेसर्वत्रपरिसंख्याविधिनाश्रुत्याशब्देननान्यनिवृत्तिर्नोच्यते अन्यनिवृत्तिः शब्दार्थोनभवति किंतुअ र्थादेवस्मर्यते तथासतिशब्दतएवान्यनिवृत्तिप्रतिपादनांगीकारेसतीत्यर्थः स्वार्थत्यागइति इत्यश्वाभिधानीमादत्ते इतिपरिसंख्याविधिवा

क्ये अनेनमंत्रेणाश्वाभिधान्यादानंकर्त्तव्यमितिस्वार्थस्तत्राश्वाभिधानीमादत्ते इति वाक्यस्यानेनमंत्रेण गर्दभरशनादानंनकर्त्तव्यमितिशब्दांगीकारेअ
श्वाभिधान्यादानस्यस्वार्थस्यत्यागः विध्यपेक्षायाः परस्यनिषेधस्यार्थः गर्दभरशनादानंनकार्यमित्येवंरूपस्तस्यकल्पना लिंगांतररशनाद्वये स्यप्राप्त
स्यमंत्रस्यगर्दभरशनाग्रहणेबाधः इतिदोषत्रयंस्यादित्यर्थः तत्राद्यंदोषद्वयंशब्दविषयंतृतीयदोषोर्थविषयः फलतोन्यनिवृत्तिरितिपक्षेपिप्राप्त
बाधोस्त्येव तथापितस्यार्थिकत्वाद्वास्तविकप्राप्त्यभावाद्वानदोषः ततोदोषत्रयप्रसंगाभावायापूर्वविधिद्वारकोवापरिसंख्याविधिरंगीकार्यइत्याह अ
तः कल्पिताप्स्यतोपीति यथाप्राप्तस्यप्रापणमनर्थकमेवंविधिप्रवृत्तिक्षणेप्राप्तिरहितस्यविधिप्रवृत्त्युत्तरकाले प्राप्स्यतोपिप्रापणमनर्थकमितिदृष्टांतव्यंज
कमपिपदं श्रुतिर्हिविलंबितप्रवृत्तिकाल्लिंगात्पूर्वमेवप्रवर्तते श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यासुत्तरोत्तरापेक्षयापूर्वपूर्वस्यप्रथमंप्रवृत्तेः यथा-
ऐन्द्र्यागार्हपत्यमुपतिष्ठतइत्यत्रैंद्रलिंगेनैंद्रोपस्थानेमंत्रवि नियोजनात्पूर्वमेवश्रुत्यागार्हपत्योपस्थानेइंद्रपदोपेतोमंत्रोविनियुज्यतएवमिमामगृभ्णन्
रशनामृतस्येत्यश्वाभिधानीमादत्तइत्यत्रलिंगप्रवृत्तेः पूर्वमेवश्रुतिरश्वाभिधान्यादानेमंत्रंविनियुंक्ते श्रुतिप्रवृत्तिक्षणेलैंगिकविनियोगप्राप्त्यभावादपूर्व
विधिरयं एतदुभयभावेपिरशनाग्रहणप्रकाशनसामर्थ्यरूपाल्लिंगान्मंत्रोश्वरशनादानेप्राप्स्यति क्रतस्याव्यभिचारितफलस्यक्रतोः संबंधिनीरशना

यथोक्तंतंत्रवार्तिके अप्राप्तविधिरेवायं अतोमंत्रस्यनिश्चितः परिसंख्याफलेनोक्तानर्थविशेषः पुनः श्रुतेरिति १

पशुरज्जुं अगृभ्णन्नितिमंत्रार्थसत्वात् यथाबर्हिर्देवसदनंदामीतिमंत्रोविधिंविनैवबर्हिश्छेदनप्रकाशनसामर्थ्याल्लिंगादेवबर्हिर्लवनेप्राप्तोनितद्वत् प्र
तः प्राप्स्यतः प्रापणं अनर्थकमितिविधिवैयर्थ्यप्राप्तेरशनालिंगसामान्यादश्वरशनादानइवगर्दभरशनादानेपिमंत्रः प्राप्स्यति चयनेश्वरशनादान
स्येवगर्दभरशनादानस्याप्यनुष्ठेयमानत्वात् ततोगर्दभरशनादानेमंत्रनिवृत्तिर्विधेःफलमितिफलतो ऽन्यनिवृत्तिप्रयोजनो ऽपूर्वविधिद्वारकः परि
संख्याविधिः आज्यभागौयजतीत्यपि अपूर्वविधिद्वारापरिसंख्या उपदेशादतिदेशस्यविलंबितप्रवृत्त्या ऽज्यभागौयजतीतिविधिप्रवृत्ति क्षणेप्र
तिदेशादाज्यभागाद्यंगसमूहप्राप्त्यभावात् अत्रवार्तिकंप्रमाणयति अप्राप्तेति अतःश्रुतिप्रवृत्ति क्षणेलिंगप्राप्त्यभावादन्यनिवृत्तौशाब्दादि
दोषत्रयप्राप्तेश्चायमश्वाभिधानीविधिरपूर्वविधिरेवमंत्रस्यनिश्चितः परिसंख्यागर्दभरशनादानेमंत्रनिवृत्तिस्तुफलेनोक्तासूचिता ननुलिंगे-
नरशनासामान्येनविनियोग उक्तइति अश्वाभिधानीमादत्तइतिश्रुतेःपुनरश्वरशनारूपोविशेषउक्तः इत्यवगम्यते इत्यस्तु नतश्चश्रुत्या
लैंगिकविनियोगस्यबाधोन उपसंहारन्यायेनश्रौतलैंगविनियोगयोरेकवाक्यत्वसंभवात् उपसंहारोनामसामान्यप्राप्तस्यविशेषेसंकोचः
यथापुरोडाशंचतुर्धाकरोतिइतिपुरोडाशसामान्यप्राप्तंचतुर्धाकरणमाग्नेयंचतुर्धाकरोतीतिवाक्येनाग्नेयेसंकोच्यतेतेनवाक्यद्वयैकवाक्य

नानद्रूदत्रसंभवात् लिंगबाधेनगर्दभरशनानिवृत्तिफलकत्वंविधेर्नसंगच्छतेतत्राह नविशेषःपुनःश्रुतेरिति लिंगेनसामान्यतोऽवगम्यनेविशेष स्तुश्रुत्यैवेत्यवगम्यतेइति नवाच्यमित्यर्थः श्रौतविनियोगलक्षणोलिंगेनसामान्यविनियोगोक्तेरेवाभावेनउपसंहारन्यायवैलक्षण्यात् उपसंहारेहिप्रथमंसामा न्यंप्रवर्ततेपश्चाद्विशेषः प्रकृतेतुप्रथमंश्रुत्युक्तविशेषप्रवृत्तिः पश्चात्सामान्यलिंगबोधकप्रवृत्तिरितिनियमविधिद्वारापरिसंख्यामाह क्वचिदिति पंच नखभक्षणस्यरागतोनित्यप्राप्तत्वादपूर्वविधिर्न दोषत्रयदुष्टत्वाच्छाब्दीपरिसंख्यापिन ततःपक्षप्राप्त्यभावेपिपरिशेषान्नियमविधिः तस्यचाप्राप्तांश पूरणरूपफलाभावादितरनिवृत्तिःफलत्वेनकल्प्यते अतएवव्याकरणशास्त्रेसूत्रांतरैर्नित्यप्राप्तिविषयेआरभ्यमाणःसर्वोपि परिसंख्याविधिर्निय मविधित्वेनव्यवह्रियतेस्वार्थत्यागादिदोषत्रयपरिहारायचविधिमुखेनप्रवृत्तिःस्वीकृत्यनियमार्थएवैवकारगर्भितएवप्रायोवाक्यार्थोकारुउच्यते न तुनञ्गर्भितः अन्यथोभयप्राप्तौकर्मणीत्यादेःकर्मण्येवषष्ठीनिवृत्तिर्नोच्यते किंतुकर्मपदस्यकर्तरिलक्षणान्नञः अध्याहारंचकृत्वाकर्तरिषष्ठीनि त्येववृत्तिरुच्येत राजपुरुषादौचकृत्तद्धितसमासाश्चेतिप्रातिपदिकसंज्ञेनियमंयाश्चनसंगच्छेरन् नियमस्यनिषेधमुखेनप्रवृत्तौसमासग्रहण

क्वचित्तुरागतोनित्यप्राप्तस्याप्राप्तांशपूरणलक्षणस्यनियमफलस्याभावान्नियमविधिद्वाराफलतःपरिसंख्याभवति यथा–
चपंचपंचनखाभक्ष्याइतितथारागतोनित्यप्राप्तस्यव्यवायादेर्विवाहादिनियमेनाभ्यनुज्ञाद्वारापरिसंख्येति ननुयदिअभ्य–
नुज्ञामात्रमेनद्रूवेनर्हि ऋतुस्नातांतुयोभार्यांसन्निधौनोपगच्छति घोरायांभ्रूणहत्यायांपच्यतेनात्रसंशयइतिदोषश्रवणंनस्यात्

स्यवाक्येप्रातिपदिकसंज्ञानेत्यर्थकत्वेनराजपुरुषादौसंज्ञाविधायकत्वाभावात् तस्मात्पंचनखभक्षणादौनियमविधिद्वारकः परिसंख्याविधिर्व्याकर णशास्त्ररीत्यायुक्तइति यथापंचपंचेति पंचपंचनखाभक्ष्याब्रह्मक्षत्रेणराघव शशकःशल्लकोगोधाकूर्मःखड्गीचपंचमइतिपंचैवपंचनखाभ क्ष्याअर्थादितरेवानरादयोनभक्ष्याइति अत्रहिविधिविषयस्यपंचानांभक्षणस्यावश्यकत्वंन भक्षणाकरणेप्रायश्चित्ताभावात् किंतुपंचेतरभ- क्षणेप्रायश्चित्तं एवंव्यवायादेरावश्यकत्वाभावाद्भार्यागमनाद्यकरणेप्रायश्चित्तंनकिंतुपरदारगमनादौप्रायश्चित्तमितिप्रकृतेयोजयति तथेति एवंविधेयस्यावश्यकत्वानावश्यकत्वेबीजंस्थूलबुध्दिसमाधानायव्यंजयित्वैतदपिनसर्वव्यापके व्याकरण शास्त्रेनियमद्वारकपरिसंख्याविषयेष्व- वश्यानुष्ठेयत्वदर्शनात्तद्वदत्रापिअवश्यानुष्ठेयत्वमस्त्वितिगूढशंकांमनसिनिधायावश्यकत्वानावश्यकत्वेबीजांतरंव्यंजयन्नाह रागतइति नित्यवदितिच अयंभावः नात्रावश्यकानावश्यकत्वेऽपूर्वविधिद्वारकत्वनियमविधिद्वारकत्वेएवबीजं किंतुपक्षप्रापकस्यउभयोर्नित्यतः प्रापकस्यचप्रमाणस्यशाश्वतिकत्वाशाश्वतिकत्वेव्रीहीनवहंतीत्यादिनियमस्थलेपि तंदुलनिष्पत्त्याक्षेपकनित्यप्रवृत्तपुरोडाशादिविधिबलादेवावघातस्या ३०

वश्यानुष्ठानं नतुनियमविधिबलात् स्वतएवावघातेप्रवृत्तंप्रतिनियमविधिप्रवृत्त्ययोगात् एवंवेदाध्ययनादावपियोज्यं तथापरिसंख्यास्थ
लेपिरशनालिंगस्यातिदेशस्यनिर्त्येप्रवृत्तत्वात् बलादेवानुष्ठानंनतुपरिसंख्याविधिबलात् परिसंख्यायाःअन्यनिवृत्तौतात्पर्येणावश्यकत्वेनात्पर्या-
भावात् एवंव्याकरणशास्त्रेपिसामान्यविधीनांनित्यत्वादेवपरिसंख्याविषयेप्यवश्यानुष्ठेयत्वमूह्यं प्रकृतेतुयथापंचनखभक्षणादौनित्यतः प्राप
कस्यरागस्यकादाचित्कत्वेनशश्वत्प्रवृत्त्यभावात् रागसत्त्वेभक्षणं रागाभावेनभक्षणंइतिनविधेयस्यावश्यानुष्ठानं एवंस्त्रीसंगादौनित्यतःप्रवर्तकस्य
रागस्यशाश्वतिकत्वाभावात् रागसत्त्वेःवश्यानुष्ठानंविरागिणांतुनावश्यकत्वंएत स्त्र्यंजनपिवनित्यवत्प्राप्तस्येतिवतिप्रत्ययः रागस्यसर्वपुरुषेसर्वकालेचनि
यतत्वाभावेननित्यत्वाभावादिति एतामेवगूढांशंकांस्पष्टमाह नन्वित्यादि ना भ्रूणहत्यागर्भहत्या श्रवणंनस्यादिति दोषश्रवणान्नियमविधि
द्वारकपरिसंख्याविषयेपि अवश्यानुष्ठेयत्वं अस्त्वित्यर्थः समाधानंस्पष्टयति मनसिकामइति रागस्यैवमूलप्रवर्तकप्रमाणत्वान्नियमद्वारकपरि
नैषदेषः मनसिकामेसत्यपि तस्यामरुच्याद्वेषादिनायानामनुपगच्छतोदोषश्रवणोपपत्तेरितिसर्वमनवद्यं ११ ६७
संख्याविधेस्तुइतरनिवृत्तावेवतात्पर्येणावश्यानुष्ठानेतात्पर्याभावात् रागाभावेप्रवर्तकप्रमाणस्यैवाप्रवृत्त्यानुष्ठानाभावेदोषाभावोःयुक्तएव एव
मग्नीषोमीयादेः पशुद्रव्यकयागस्यसुरायुक्तसौत्रामण्यादेश्चविषयरागिणिपुरुषेंतःकरणशुद्ध्यभावात् विषयरागाभावेंतःकरणशुद्धिसि
द्ध्याकर्माधिकाराभावात् ज्ञानेभक्तौवाधिकारोसत्याज्योतिष्टोमाद्यनुष्ठानस्यैवावश्यकत्वाभावात् आमिषमद्यसेवयोरनावश्यकत्वं नत्वत्रज्योति
ष्टोमः कार्योमांसमात्रंनभक्षणीयमितितात्पर्येविधिवैगुण्यापातात् सुराग्रहस्यकलिवर्ज्यत्वात्कलौसौत्रामणिरेवनकार्यइतिकेचित् अन्येतुसौत्रा
मणिःकार्यःसुराग्रहस्थानेप्रतिनिधिः कार्यइत्याहुः ममतुश्लोकतात्पर्यएवंप्रतिभाति व्यवायादिषुरागतःप्राप्तत्वादपूर्वविधिर्न पक्षप्राप्त्यभा
वान्नियमोन दोषत्रयग्रस्तत्वादपूर्वनियमयोर्द्वारत्वासंभवाच्चपरिसंख्यापिन किंतुसामान्यप्राप्तस्यविशेषेसंकोचरूपःउपसंहारः तथाहि
यथापुरोडाशंचतुर्धाकरोतीतिपुरोडाशसामान्येप्राप्तंचतुर्धाकरणमाग्नेयंचतुर्धाकरोतीतिवाक्येनाग्नेयेसंकोच्यते नात्रनियमःपरिसंख्यावापि
मांसकेरुच्यते एवंरागतःपंचनखसामान्येप्राप्तंभक्षणंपंचपंचनखेषुसंकोच्यते परिसंख्योदाहरणंतुइत्यश्वाभिधानीमादत्तइत्यादिकम
पूर्वविधिद्वारकमेकविधेयत्वात् स्त्रीसामान्येकालसामान्येचव्यवायःप्राप्तःऋतौभार्यायांचसंकोच्यतेएवमामिषसेवादावपियोज्यं तथाच
विधिबलात्प्राप्त्यभावेनरागतएवप्राप्तत्वेननिवृत्तिरेवविरागिणामिष्टेति इत्थमेतत्पक्षेश्लोकयोजना व्यवायादयोनित्याःरागतःप्राप्ताइति
तेषुचोदनाकोपिविधिर्नास्ति तर्हिऋतौभार्यामुपेयादित्यादेःकोर्थः तत्राह व्यवस्थितिरिति अव्यवस्थयासर्वत्ररागतःप्राप्तंव्यवायादि
कं तस्यविवाहयज्ञसुराग्रहैर्व्यवस्थाक्रियते उपसंहारापरनामासंकोचः क्रियतेइत्यर्थः तस्माद्विधेरभावान्मूलभूतप्रापकरागस्यदुर्व

लत्वाद्विचारेणापनोद्यत्वाच्चविरागिणांनिवृत्तिरेवेष्टानप्रवृत्तिरिति इतिश्रीमदनंतोपाध्यायसूरिसूनुकाशीनाथोपाध्यायविरचितोलोके
व्यवायेति श्लोकटीकाप्रकाशः समाप्तः श्रीपांडुरंगः प्रसन्नोस्तु राक्षसाब्देच्चवैशाखेमासिषष्ठ्यांरवौशुभे श्रीकाशीनाथोपाध्यायैरचि
तः सुखबोधनः १ ७ ७ ७ ७ ७ ७ ७

## इतिएकादशस्कंधस्थलोकेव्यवायमिषेति श्लोकटीकाव्याख्या समाप्ता॰ ७

## अथश्रीमद्भागवतस्यप्रथमश्लोकस्यश्रीधरीयटीकायाःव्याख्याप्रारंभः

श्रीशंवंदे श्रीगणेशायनमः श्रीरुक्मिणीसमेतंश्रीमद्विठ्ठलविभुंगुरुंस्वप्रभुः धीवाग्विलासहेतुंश्रितकामदुघांघ्रिसारसंवंदे १ श्रीभागवत
भिध्यर्थटीकादृष्टिरकारियैः श्रीधरस्वामीपादांस्तान्वंदेभक्त्यैकदर्शनान् २ श्रीमद्दशमस्कंधतोषणिसार संग्रहारंभेपुराणानांवेदचतुष्टय
व्याख्यानुभूतपंचमवेदरूपत्वंप्रमाणतोविस्तारेणोपपादितं ननएवज्ञातुमलमितिनेहदिनन्यते तत्रतावत्साकारब्रह्मभजनेनैव अभीप्सितच
तुर्वर्गसिद्धिरिति श्रीमद्भागवतसिद्धांतंसूचयन् निजेष्टदेवतानुस्मरणरूपंमंगलमाचरति वागीशेति सरस्वतीयस्यमुखेइत्यर्थः अथवाई
शाविधिनिषेधंजीवान् नियमयंतीवेदलक्षणावाक्यस्यमुखेइत्यर्थः अनेनतद्वदनानुस्मरणात् अपरविद्यावाभिर्ध्वनिता यदुरसिसं

श्रीगणेशायनमः श्रीपरमेहंसास्वादितचरणकमलचिन्मकरंदायभक्तजनमानसनिवासायश्रीरामाय
वागीशायस्यवदनेलक्ष्मीर्यस्यचवक्षसि यस्यास्तेहृदयेसंवित्तंनृसिंहमहंभजे १ ७ ७

धिष्ठात्रीश्रीः हेमरेखारूपेणास्ते इतिसच्चिन्मूर्तौभगवति चिज्जडभागाभावेनदेहदेहिभागसंभवेपियत्नवदनादिस्मरणात
इष्टसाधनसंपल्लाभसिद्धिः अनेनत्रिवर्गलाभः विद्यालक्ष्मीभ्यांहित्रिवर्गसिद्धिः यस्यहृदयेसंवित् परविद्या आस्ते इति त-
द्भजनाद्ब्रह्मात्मैक्यज्ञानरूपपरविद्याप्राप्तिरितिमुक्तिसिद्धिः अत्रहृदयसंविदोरभेदात्पूर्ववद्व्यपदेशः तंनरसिंहमूर्तिंभगवंतंकी
र्तनभजनादिभिःसेवेचतुर्वर्गलाभायेत्यर्थः यावैसाधनसंपत्तिःपुरुषार्थचतुष्टये तयाविनातदाप्नोति नरोनारायणाश्रयः धर्मार्थ- 
काममोक्षाख्यंयइच्छेच्छ्रेयआत्मनः एकंह्येवहरेस्तत्रकारणंपादसेवनमित्युक्तेः १ ७ ७

इदानींग्रंथप्रतिपाद्यदेवतांप्रणमति विश्वेति अत्रसर्गोविसर्गश्चस्थानंपोषणमूतयः मन्वंतरेशानुकथानिरोधोमुक्तिराश्रयइतिदशलक्षणानिलक्ष्यं
ते तानित्रयोविश्वसर्गविसर्गादिकर्तासपरमात्माश्रीकृष्णइत्येवंप्रकारेणदशमस्यआश्रयस्यसर्वाधारस्यपरमेश्वरस्यलक्षणानिसंपद्यंते तथाच
मुक्तिपर्यंतैर्नवभिर्लक्षणैर्बोधितंश्रीकृष्णंब्रह्मनमामीत्यर्थः कृष्णाख्यमित्याख्यापदेननामरूपवत्त्वोक्तावपिमायातत्कार्यस्पर्शरहितमित्याह परं
धामेति मुक्तप्राप्यमित्यर्थः इत्थमेववेत्ताचवेद्यंचपरंचधामेत्यत्रभाष्यकारैर्व्याख्यानं जगतोधामआश्रयइतिदशमलक्ष्यरूपतोपपादनं यद्वा
जगद्धामयस्येतिविश्वानुस्यूतत्वेनअंतर्यामिरूपता नमामेतिप्रार्थनायांप्राप्तकालेलोट् बहुवचनंतुअस्मदोद्वयोश्चेत्येकत्वेपिसाधु २ हरिह
रयोरभेदज्ञानान्निर्बाधेष्टसिद्धिरितिबोधयन्नेतौप्रणमति माधवेति ईशाइति इत्थंद्वयासंभवादभेदएवतयोःपर्यवस्यतीत्यर्थः नामरूप
दिभेदस्तुतत्तद्भक्तप्रीतिवशात्जातइतिभावः तदुक्तंतातचरणैः हरहर्योःप्रकृत्यैक्यंसाधनैक्यंतथापितौ प्रत्ययेभजनारुच्यासंप्राप्तौभिन्नरू
पतामिति व्याख्याअत्रहरिहरशब्दयोस्तदर्थभूतविष्णुशिवयोश्च प्रकृतिश्चिद्रूपतास्वभावोहृञ्हरणइतिधातुश्चसाधनंभजनादिकंकर्त्राध
र्थप्रत्ययगुणोत्पादनंच प्रत्ययःप्रतीतिः प्रत्ययसंज्ञकाविकाराकारौचरुचिःइच्छामेघश्यामकर्पूरगौरकांतिश्च रूपंचतुर्भुजपंचमुखत्व
विश्वसर्गविसर्गादिनवलक्षणलक्षितम् श्रीकृष्णाख्यंपरंधामजगद्धामनमामतत् २ माधवोमाधवावीशौसर्वसिद्धि-
विधायिनौ वंदेपरस्परात्मानौपरस्परनुतिप्रियौ ३ संप्रदायानुरोधेनपौर्वापर्यानुसारतः श्रीभागवतभावार्थदीपिकेयंप्रतन्यते४
दि अकारांतेकारांतशब्दरूपंचयोज्यंभजतांनामसेविनां इच्छयाविकारादिप्रत्ययेकृतेसतीत्यन्वयः अयमर्थःभक्तानांप्रत्ययेप्रतीतौकांत्या-
भिन्नरूपतामितिच ३ विशेषद्वयविशिष्टग्रंथरचनांप्रतिजानीते समिति संप्रदायोब्रह्मादिपरंपरागतार्द्वैतादिरूपः तदनुवर्त्तनेपिपौ
र्वापर्यानुस्मरणमावश्यकं अन्यथाकृष्णस्तुभगवान्स्वयमित्यादिपूर्वापरवाक्यानालोचनेनअथाहमंशभागेनेत्यादावंशावतारत्वादिव्याख्या
नंस्यात् नहितथाव्याख्यानेप्यद्वैतसंप्रदायोहीयते मेदवादिभिरपिपौर्वापर्यमनुश्रीयते इतिसंप्रदायइत्युक्तं अथवासंप्रदायः श्रीम
द्भागवतव्याख्यानपद्धतिः सायथाभगवताब्रह्मणानारदंप्रति त्वमेतद्विपुलीकुर्वितिउक्त्वाउपदिष्टा यथाहरौभगवतिनृणांभक्तिर्भविष्यति
सर्वात्मन्यखिलाधारेइतिसंकल्प्यवर्णयेति हरिलीलाप्राधान्येनश्रीभागवतंवर्णयतुभक्तिरसविधानेनकेवलंतत्त्वमिति एवंचयथा
मामेवयेप्रपद्यंतेमायामेतांइत्यादौप्रपद्यंतइत्यादिपदानांभगवदेकशरणाद्यर्थं विहायब्रह्मात्मैक्यज्ञानार्थतादिव्याख्यानंभगवत्पादैः
कृतं तथात्रभक्तिप्राधान्यविधायकवाक्यानांभक्तिरसविधानकंज्ञानादिप्राधान्यतयाव्याख्यानंनकर्तव्यमितिनिर्भ्रत्ब्रह्मणाव्याख्यानप
द्धतिर्विहिता अतएवनंदगोपकुमारायेत्यादौनंदयतीतिनंदः गावेदंपालयतीतिगोपः कुंभविद्यांमारयतीतिकुमारः नंदश्चासौगोप

श्चासौकुमारश्चेत्यर्थं श्रीभागवतंव्याचिकीर्षुः कश्चिद्दिपश्चिद्भगवतेंयनिवारिनइतिमहाजनप्रसिद्धिः तथाचब्रह्मोपदिष्टभक्तिप्राधान्य
संप्रदायानुरोधेनेत्यर्थः तदनुरोधेपिपौर्वापर्यानालोचनेपूर्वोक्तंश्रीकृष्णेअंशतयाव्याख्यानंमायाप्रतिबिंबत्वंमायिकविग्रहत्वंमध्वाद्य-
भिमतेनभेदादिव्याख्यानंचापिस्यात् स्वरसतःपौर्वापर्यालोचनेनतुनैतदितिपौर्वापर्यानुसारतइत्युक्तं भावार्थदीपिकेतिग्रंथनाम ४ स्वगर्वं
परिहरति क्वेति अत्रयद्यपीतिशेषः अणुनापयोनिधिमथनवत् अल्पमतेरियंप्रतिज्ञातार्थसिद्धिरसंभावितायद्यपीत्यर्थः ५ तत्सिद्धिंसंभा
वयति मूकमिति अत्रतथापीत्यादिः वाचामूकं अलंपर्याप्तंभूषितंवाकरोतीत्यर्थः लंघयतेइत्यत्रआत्मनेपदसाधुत्वायक्रियाफलस्यक
र्तृगामित्वयोजनायासोनकार्यः ततानसोपानपरंपरामिवेत्यादौकालिदासादिभिर्बहुशस्तन्मर्यादायाअनादृतत्वात् अत्रमाधवेतिगुरुना
मेतिसंप्रदायविदः तेनगुरुवंदनमपिफलितं ६ भक्तिभक्तभगवन्माहात्म्यप्रतिपादकं श्रीभागवतशास्त्रमेवश्रवणपठनपूजनवंदनादि
नासेवितं कामिमोक्षादिसकलपुरुषार्थप्रदंकिमुतभक्ताभक्तिर्भगवांश्चेतिव्यंजयितुंतथात्वेनश्रीमद्भागवतशास्त्रंवर्णयति श्रीमदिति श्री-
मद्भागवतमितिषडक्षरंनामयस्य श्रीमद्भागवतेमहामुनिकृतेइत्यादिषुमूले तथाव्यवहारात् भागवतमितिव्यवहारस्तुभामासत्येतिवत्पू

काहंमंदमतिःक्वेदंमंथनंक्षीरवारिधेः किंतत्रपरमाणुर्वैयत्रमज्जतिमंदरः ५ मूकंकरोतिवाचालंपंगुंलंघयतेगिरिम् यत्कृपातमहंवं
देपरमानंदमाधवम् ६ श्रीमद्भागवताभिधःसुरतरुस्तारांकुरःसज्जनिस्कंधैर्द्वादशभिस्ततःप्रविलसद्भक्त्यालवालोदयः द्वात्रिं
शत्त्रिशतंचयस्यविलसच्छाखाःसहस्राण्यलंपर्णान्यष्टदशोष्टदोऽतिसुलभोवर्वर्त्तिसर्वोपरि ७ ७ ७

र्वपदलोपात् तारःप्रणवः अंकुरोयस्य ॐ जन्माद्यस्येतिप्रणवोच्चारपूर्वकोत्यस्यारंभः केचित्तु ॐ नैमिषेनिमिषक्षेत्रेइत्यत्रप्रमाणंपठं
ति द्वात्रिंशच्चत्रयश्चशतानिचेतित्रिपदद्वंद्वः कपिंजलानालभेतेत्यत्रेवअनिर्धारितविशेषं बहुत्वंत्रित्वेपर्यवस्यति तेनपंचत्रिंशदधिक
शतत्रयसंख्याःशाखाइत्यर्थः समाहारोत्तरद्वंद्वेतुत्रिशतीतिस्यादितिवत्साहरणलीलारंभेप्रपंचितं एतेनाघासुरवधाद्यध्यायाभावाभिप्रा
यं द्वात्रिंशतदधिकस्यचिदुत्प्रेक्षितंप्रत्युक्तं हरिलिलाग्रंथेबोपदेवेन निरोधोदशमस्कंधेनवत्यध्यायईरितः इत्युपक्रम्य वधश्चवत्सबक
योस्तथाघासुरभोगिनः वत्सचोरब्रह्ममोहोब्रह्मणास्तवनंहरेरित्युक्तत्वेनतद्विरोधापत्तेः अष्टदशाचसहस्राणीतिपृथक्पदेनान्वयःसमासे
अष्टदशेतिस्यात् ७ परंपरमेश्वरमिति बिंबभूतमीश्वरमित्यर्थः तेनमायाप्रतिबिंबितेश्वरव्यावृत्तिः द्वेधात्रप्रक्रिया तत्राद्यायथा-
अविद्याप्रतिबिंबोजीवः मायाप्रतिबिंबईश्वरः सचउपाधिभूतमायायास्त्रिगुणत्वात्तत्तद्गुणविशिष्टमायाप्रतिबिंबभेदेनब्रह्मविष्णुशिवरू-
पः बिंबभूतस्तुपरमेश्वरोनिरुपाधिकंब्रह्मैवसचादिनारायणःश्रीकृष्णइत्यादिपदेनव्यवह्रीयते शिवपुराणादौत्वपराशिवादिपदैःसच ३२

स्वांशमायाप्रतिबिंबितेश्वरधर्मैः सृष्ट्यादिकर्तृत्वादिभिरभिलक्ष्यते द्वितीयपक्षे अविद्यामायाचएकैवतत्प्रतिबिंबोजीवः बिंबभूतंचैतन्यं ईश्वरोनिरुपाधिकाएवसगुणएवसृष्टिस्थितिप्रलयकर्तृत्वाद्यारोपितधर्मैर्भ्रान्ति ष्याद्यदिभेदव्यवहारभाक् बिंबत्वप्रतिबिंबत्वाभ्यामनाक्रांतं शुद्धचैतन्यंनिर्धर्मकब्रह्मेति अत्रशास्त्रेद्विविधाप्रक्रियोपलभ्यते सर्वथाएतत्शास्त्रपरमतात्पर्यगोचरोबिंबभूतःपरमेश्वरोनिर्गुणंब्र ह्मैवतत्राभिलक्ष्यमानगुणानांचिन्मयत्वेनप्रकृतिपरिणामभूतगुणाश्रयत्वाभावात् स्पष्टंचेदं मांभजंतिगुणाःसर्वे निर्गुणंनिरपेक्षकं सुहृदंप्रियमात्मानंसाम्यासंगादयोगुणाइत्यादौ लिङि विधिङि छांदसमिति ध्यैचिंतायामीत्यस्मा द्व्यत्ययोबहुलमितिसूत्रेणपरस्मैपदव्य- त्ययादात्मनेपदं छंदस्युभयथेत्युभयसंज्ञायांसार्वधातुकत्वात्सीयुटः सकारलोपः अर्धधातुकत्वाद्भवभावः बाहुलकात्ध्यायतेःसंप्रसार णंहलइतिदीर्घः इतिवैदिकप्रक्रियास्थसूत्रैःसाधनीयमित्यर्थः स्वरूपतटस्थलक्षणाभ्यामिति यत्स्वरूपांतर्गतंसदितरव्यावृत्ततया लक्ष्यंबोधयति तत्स्वरूपलक्षणं यथागोःसास्नाशृंगादि यावल्लक्ष्यकालमनवस्थितत्वेनस्वरूपानंतर्गतंसत् यल्लक्ष्यंइतरव्यावृत्तंबोधयति

अथनानापुराणशास्त्रप्रबंधैश्चित्तप्रसत्तिमलभमानस्तत्रतत्रापरितुष्यन्नारदोपदेशतः श्रीमद्भगवद्गुणवर्णनप्रधानंभागवतशास्त्रंप्रा

जन्माद्यस्ययतोऽन्वयादितरतश्चार्थेष्वभिज्ञःस्वराट् तेनेब्रह्महृदाय आदिकवयेमुह्यंतियत्सूरयः

रीप्सुर्वेदव्यासस्तत्प्रतिपाद्यपरदेवतानुस्मरणलक्षणंमंगलमाचरति जन्मादीति परंपरमेश्वरम् धीमहीतिध्यायतेर्लिङिछांद

संध्यायेमेत्यर्थः ) ७२ ७२

तत्तटस्थलक्षणं यथागोविशेषस्याअलंकारविशेषादि देवदत्तगृहस्यकाकादिर्वाभिहतं सत्यंज्ञानमनंतंब्रह्मपरमेश्वरस्वरूपमेवसत् अस ज्जडदुःखप्रपंचव्यावृत्ततयाबोधयतीतिस्वरूपलक्षणंसंपद्यते जगज्जन्मादिकारणत्वंतुतटस्थलक्षणंनहितत्सर्वदास्तिप्रलयादिकालेतदभा वात् अतःस्वरूपानंतर्गतंसदाकाशादिव्यावृत्तमीश्वरंलक्षयतीतितटस्थलक्षणंतदाह तत्रस्वरूपेत्यादि सत्यपदंज्ञानानंदयोरुपलक्षणं भूतेंद्रियेति तमःसर्गः आकाशादिभूतपंचकं रजःसर्गः कर्मेंद्रियपंचकंप्राणपंचकंच सत्वसर्गः ज्ञानेंद्रियपंचकंअंतःकरणचतुष्टयंतत्त दिंद्रियाद्यधिष्ठातृदेवताश्चेतिविभागः उद्यमिति वारिणिसमुद्रजले दूरत्वदोषेणनीलशिलाबुद्धिः यथावासभायांजलेस्थलभ्रमोदुर्योधन स्यअंधकारस्थरज्जुरूपमृदिस्वदिरांगारभ्रमइत्यादि अत्रपक्षेअकारप्रश्लेषेणअमृषापदंसत्यवाचकंकृत्वासत्यवदितिसत्यसदृशो लाक्षणिकंकार्यंइतिगौरवंइत्यस्वरसादाह यद्वेति यत्रेत्यनेनेति यत्रशब्दस्याद्योर्जनादिभ्रमाधिष्ठानत्वंतत्रसर्वत्रावरणंदृष्टं इत्यस्वा त्याकाशादिभ्रमाधिष्ठानत्वोक्त्याउपाधिना शेषहेत्वज्ञानेनसंबंधः परमेश्वरस्यप्रतीयते तथाचअज्ञानसंबंधेनस्वानस्यात्परमेश्वरत्वं

अज्ञानसंबंधोहिसर्गाद्यकालेतदाश्रयत्वरूपोवाच्यः तदानींअज्ञानाश्रयाणांजीवानामभावादनस्तत्संबंधंवारयतीत्यर्थः महसास्वरूपज्ञानेन
कपटमज्ञानसंबंधादि अयंभावः अनावृतसंविद्रूपेबिंबभूतेईश्वरेअज्ञानाश्रयत्वासंभवात् अज्ञानविषयमात्रेणभ्रमाधिष्ठानता नचतावं
ताऐश्वर्यहानिः अज्ञानविषयेमण्यादौकपर्दिकाद्यारोपेपिस्वरूपप्रकाशादेर्बाधादर्शनात् सृष्टिप्राक्कालेपिअनादिजीवानांअज्ञानाश्रयाणां
सूक्ष्मरूपेणसत्वात्तत्काप्यनुपपत्तिरिति जन्माद्यस्येति तद्गुणसंविज्ञानोबहुव्रीहिः जन्मस्थितिभंगंसमाहारःसमासार्थः समाहारेनपुंस
कत्वैकत्वयोः सत्वात् जन्मादीतिनपुंसकैकवचनं यत्तइतिपंचम्यर्थस्तसिल् निमित्तोपादानोभयपरः यस्मात्परमेश्वरात्कर्तुरुपादानाच्च
भवतीत्यर्थः यतइत्यव्ययनिर्देशेनकारणस्याविकृतत्वंध्वन्यते तत्रपरमेश्वरस्योभयविधकारणत्वेहेतुः अन्वयादिति यत्सत्वेयत्स
त्वत्वमन्वयः यदभावेयदभावोव्यतिरेकः यथामृदःकुलालस्यवासत्वेघटोत्पत्तिसत्वं तदभावेनदभावाधिकरणोनंत्वादौघटोत्पत्त्यभावइत्य
न्वयव्यतिरेकौप्रत्यक्षौ मृदादेःकारणत्वेघटादेःकार्यत्वेचमानंतथायत्रयत्रसद्रूपेणपरमेश्वरस्यसत्वंघटःसन्इतिप्रत्यक्षतोदृश्यते तत्र
कार्यत्वंयत्रखपुष्पादौतदभावः खपुष्पंसत् खपुष्पमस्तीत्यनुभवाभावात् तत्रकार्यत्वस्याभावइतिअन्वयव्यतिरेकौईश्वरस्यकारण
बहुवचनंशिष्याभिप्रायम् तमेवस्वरूपतटस्थलक्षणाभ्यामुपलक्षयति तत्रस्वरूपलक्षणंसत्यमिति सत्यत्वेहेतुःयत्रय

तेजोवारिमृदांयथाविनिमयोयत्रत्रिसर्गोमृषाधाम्नास्वेनसदानिरस्तकुहकंसत्यंपरंधीमहि १

स्मिन्त्रयाणांमायागुणानांतमोरजःसत्वानांसर्गोभूतेंद्रियदेवतारूपः अमृषासत्यः ५ ६
त्वंजगतःकार्यत्वंचबोधयतइत्यर्थः अत्रार्थपदेनकार्यार्थकेन अन्वयग्रहाधिकरणमुपात्तं व्यतिरेकग्रहाधिकरणंखपुष्पादिकंतुव्यतिरे-
कार्थकादितरपदादाक्षेपलब्धमितिबोध्यं ननुमृदादिव्यतिरेकग्रहाधिकरणं तंत्वादिभावरूपंप्रसिद्धं खपुष्पादिकंत्वलीकमनुपाख्यंतस्य
कथंव्यतिरेकग्रहाधिकरणताइत्यपरितोषादाह यद्वेति अन्वयादिपदस्ययत्सत्वेइत्यादिरर्थः पारिभाषिकः तंविहाय अवयवार्थ
योगीयौगिकोर्थःपरिगृह्यतइत्यर्थः अनुवृत्तिस्तादात्म्येनप्रतीतिः व्यावृत्तिर्भेदः अर्थेषुकार्यकरणेषुकारणस्यानुवर्तमानत्वंका
र्यस्यव्यावृत्तत्वंचदृश्यतेतेनयदनुवर्तमानंतत्कारणं यद्व्यावृत्तंतत्कार्यमितिनिश्चेतव्यं सुवर्णादिकारणंहिकारणावस्थायांकटक
कुंडलादिकार्यंतुपरस्परंकारणावस्थायांचनानुवर्तते इदंसुवर्णंकुंडलंसुवर्णकटकंसुवर्णमितितादात्म्येनप्रतीयमानत्वात् कटक ३३
कुंडलादिकार्यंतुपरस्परंकारणावस्थायांचनानुवर्तते कुंडलेसुवर्णपिंडेचकटकादितादात्म्यप्रतीत्यभावात् अतःकुंडलंकटकंनसु

वर्णपिंडः कटकं नेत्येवं भेदेन प्रतीयमानत्वात् व्यावृत्तत्वं कार्यस्य एवं घटः सन् पटः सन् इति विश्वकार्येषु सद्रूपं ब्रह्मानुवर्तते घटादिकार्ये तु
पटादौ कार्ये सृष्ट्यग्रे कारणावस्थायां च नानुवर्तते सृष्टिप्राक्कालिकं ब्रह्म घटो न घटः पटो नेत्यादि भेदप्रतीतेः अतो व्यावृत्तत्वात् विश्वं कार्यं
सद्रूपं ब्रह्म कारणमिति भावः ननु सिद्धांते निमित्तोपादानत्वोभयविधकारणत्वं परमेश्वरस्येष्टं अनुवृत्तिश्चोपादानस्यैव मृदादेर्घटादौ दृश्य
ते न तु निमित्तस्य कर्तुः कुलालादेः अतोऽनुवृत्तिव्यावृत्तिहेतुना कार्यकारणभावसाधने परमेश्वरस्योपादानत्वमेव सिध्येत् न तु कर्तृत्वमपि
किं च पूर्वमीमांसकैः सृष्टिप्रलयानभ्युपगमात् जगतो जन्मादेरप्रसिद्धौ जन्मादिकारणत्वं कथं तटस्थलक्षणं स्यादित्याशंकायामाह यद्वा
सावयवत्वादन्वयेति अत्रान्वयेतरपदाभ्यां अन्वयव्याप्तिः व्यतिरेकव्याप्तिश्च गृह्यते तेनार्थेष्विति बहुवचनव्यंजितवस्तुपरिच्छेदस
हचारितसावयवत्वादिहेतोरध्याहारः सूच्यते तथा च अर्थेषु घटपटादिकार्येषु आत्मनि च गृहीतान्वयव्यतिरेकव्याप्तिकस्य सावयवत्वा
यत्सत्यं तथा मिथ्या सर्गोऽपि सत्यवत्प्रतीयते तं परं सत्यमित्यर्थः अत्र दृष्टांतः तेजोवारिमृदां यथा विनिमयो व्यत्ययः अन्यस्मिन्नन्यावभा
सः स यथाधिष्ठानसत्तया सद्वत्प्रतीयत इत्यर्थः तत्र तेजसि वारिबुद्धिः मरीचितोये प्रसिद्धा मृदिकाचादौ वारिबुद्धिरित्यादि यथायथमू
ह्यम् यद्वा तस्यैव परमार्थसत्यत्वप्रतिपादनाय तदितरस्य मिथ्यात्वमुक्तम् यत्र मृषैवायं त्रिसर्गो न वस्तुतः सन्निति यत्रेत्यनेन प्र
तीतमुपाधिसंबंधं वारयति स्वेनैव धाम्ना महसा निरस्तं कुहकं कपटं यस्मिन् तम् तटस्थलक्षणमाह जन्मादीति अस्य विश्वस्य
जन्मस्थितिभंगा यतो भवंति तं धीमहीति तत्र हेतुः अन्वयादितरतश्चार्थेषु कार्येषु परमेश्वरस्य सद्रूपेणान्वयात् कार्येभ्य ईश्वरस्य पुष्पा-
दिभ्यस्तद्व्यतिरेकात् यद्वा अन्वयशब्देनानुवृत्तिरितरशब्देन व्यावृत्तिः अनुवृत्तत्वात्सद्रूपं ब्रह्म कारणम् मृत्सुवर्णादिवत् व्या
वृत्तत्वाद्विश्वं कार्यं घटकुंडलादिवदित्यर्थः यद्वा सावयवत्वादन्वयव्यतिरेकाभ्यां यदस्य जन्मादि तत् यतो भवतीति संबंधः
दिहेतोरस्येति पदवाच्यजगति पक्षे परामर्शादिकारणसामग्रीबलाद्यज्जन्मादि निश्चितं तत् यतो भवति तं धीमहीत्यन्वयः तत्र हेतुपुरः
सरा व्याप्तिरन्वयव्याप्तिः साध्याभावपुरःसरा व्याप्तिर्व्यतिरेकव्याप्तिः तथा च प्रयोगः इदं विश्वं जन्मादिमत्सावयवत्वात् यत्र यत्र सा
वयवत्वं घटपटादौ तत्र जन्मादिमत्वं —————— यत्र जन्मादिमत्वाभावः आत्मनि तत्र सावयवत्वाभावः तथा पृथिव्यादिजगतोऽपि साव-
यवत्वाज्जन्मादिमत्वसिद्धिः एवं परिच्छिन्नत्वदृश्यत्वादिहेतुस्वस्य व्याप्तिपक्षतादिकं बोध्यं एवं च अन्वयव्यतिरेकव्याप्तिवदनुमानेन ज
गति जन्मादिकं प्रसाध्य तत्कारणत्वं उभयविधं परमेश्वरस्य श्रुत्यैव साधनीयमित्यभिप्रायः

तदाह तथाचश्रुतिरिति अन्वयव्याप्तिकमेव अनुमानं नव्यतिरेकव्याप्तिकंइति वेदांतिमतेव्यतिरेकपदेन अर्थापत्तिर्ग्राह्या तथा चसावयवत्वाद्यन्यथानुपपत्त्याचयज्जन्मादिसिध्यतितत् यतइत्यर्थः यतोनिमित्तोपादानरूपात्परमेश्वरात् भूतानिआकाशादीनि स्थूलशरीरांतानिजायंते जातानिसंतियेनजीवंतिपोषणपालनादिकंलभंते प्रयंतिनश्यंतिसंतियदभिसंविशंति यस्मिंस्तादात्म्येनप्रविशंतितद्ब्रह्मेतिश्रुत्यर्थः आदिपदेनसच्चत्यच्चाभवत् तदात्मानस्वयमकुरुतेत्यादिश्रुत्यंतरसंग्रहः ननुनेयंश्रुतिरीश्वरस्यजगदुपादानत्वादिपराचेतनद्रव्योपादानत्वादर्शनात् घटादिकार्येहिमृदाद्यचेतनोपादानकंदृश्यतेनेन मोहजडदुःखात्मकजगतः तत्सदृशंत्रिगुणंप्रधानमेवउपादानंयुक्तं पुरुषसन्निधानमात्रेणप्रधानंस्वयमेवजगदाकारेणभवति नतचकर्तुरीश्वरापेक्षातस्मात् यतःप्रधानात्भूतानिजायंते प्रधानमेवात्मानंजगदाकारेणकुरुते इत्येवंश्रुतिभिरपिप्रधानमेवजगत्कारणत्वेन प्रतिपाद्यतइतिशंकते नहीति सजगत्कर्तापरमेश्वरोलोकान् नुनिश्चितंसृजैसृष्टिंकरवाणिइतिऐक्षत आलोचितवान् ततः

तच्छ्रुत्यतोवाइमानिभूतानिजायंते येनजातानिजीवंति यत्प्रयंत्यभिसंविशंतीत्याद्याःश्रुतयःस्मृतयश्चयतःसर्वाणिभूतानि
भवंत्यादियुगागमे यस्मिंश्चप्रलयंयांतिपुनरेवयुगक्षयइत्याद्याः तर्हिकिंप्रधानंजगत्कारणत्वात् ध्येयमभिप्रेतंनेत्या
ह अभिज्ञोयःतम् सऐक्षतलोकान्नुसृजाइति सइमांल्लोकानसृजतेतिश्रुतेः ईक्षतेर्नाशब्दमितिन्यायाच्च ६

सइमाँल्लोकान्सृष्टवान्इतिश्रुत्यर्थः जगत्कारणस्यईक्षणश्रवणाज्जडस्यप्रधानस्येक्षणासंभवात् श्रुतिभिश्चेतनमेवजगत्कारणंप्रतिपाद्यतेनप्रधानं जडमेवद्रव्योपादानंइत्यादिनियमः आरंभादिवादेदृष्टोनतुविवर्त्तवादेरज्ज्वादौसर्पादिभ्रमेजडरज्ज्वादेरपिसर्पादिचेतनत्वोपादानत्वादिदर्शनात् नविलक्षणत्वादिसूत्रैर्यथासतःपुरुषात्केशलोमानितथाक्षरात्संभवतीहविश्वमित्यादिश्रुत्याचजगद्विसदृशस्यैवेश्वरस्योपादानत्वसंभवोक्तेश्चेतिभावः विस्तरोत्राकरेद्रष्टव्यः न्यायःश्रुत्यर्थनिर्णायकःसूत्रसमुदायः तत्रेक्षतेर्नाशब्दमितिशारीरकमीमांसायांआदितःपंचमाधिकरणेसिद्धांतसूत्रं अस्यार्थः नसांख्याभिमतंप्रधानंजगत्कारणमितिप्रतिज्ञा तत्रअशब्दमितिहेतुगर्भविशेषणं अशब्दत्वात् वेदशब्दाप्रतिपाद्यत्वादित्यर्थः कुतोवेदशब्दाप्रतिपाद्यत्वंइतिशंकामाह ईक्षतेरिति सईक्षतेत्यादिश्रुतिषुजगत्कारणस्येक्षणश्रवणादीक्षणंचजडेप्रधानेनसंभवतीतिवेदशब्दाप्रतिपाद्यमतोनकारणमिति न्यायोक्तिः ईक्षणश्रुतिरपिकथंचित्प्रधानेयोज्येतेत्यादिशंकानिकरनिरासाय नन्वीश्वरस्यकर्तृत्वादिकंवैषम्यादिदोषाप्रसंगार्थंजीवकर्मापेक्षंतान्यजीवश्च ३४

धर्मादिकर्मणां कर्तोपादानश्चेतिकर्मद्वारेश्वरस्यसृष्ट्यादिप्रयोजकत्वेनजगदुभयविधकारणत्वंपर्यवस्यति लोकेजयकर्तृयोधप्रयोजके
नेनृव्यवहारदर्शनात् तथाचजीवोध्येयःस्यादितिशंकते नहिजीवइति समाधत्ते नेत्याहेत्यादि अविद्याहतज्ञानैश्वर्यस्यजीवस्यध्याने
फलाभावात् नित्यालुप्तज्ञानादिरूपंधीमहीतिभावः ननुसमष्टिजीवस्यहिरण्यगर्भस्यअनाहतज्ञानैश्वर्यश्रुतेःसध्येयोस्त्वितिशंकते नहि
किमिति अग्रेव्यष्टिजीवोपाधिकभौतिकसृष्टेः पूर्वंहिरण्यगर्भःसमुत्पन्नःजातःसन्भूतस्यजीवादिसंघस्यैकःपतिरासीदित्यादिश्रुत्यर्थः
अत्रैश्वर्यस्यान्यतःप्राप्त्यश्रवणात् तन्निदानस्यज्ञानस्यापितथात्वावगतेरनाहतत्वमितिभावः आदिकवयेब्रह्मणइति तत्रनानाविधस्लो
कैस्तत्स्वरूपस्यैवेदंप्रकाशितवान् इतिव्यंजयितुंकविपदं तत्स्तोत्राणांनिर्दोषत्वायादीति यइति यःपरमेश्वरःपूर्वंमहाकल्पादौब्रह्मा
णंविदधातिउत्पादयति दैनंदिनकल्पादौतुसुप्तंप्रबोधयति यश्चतस्मैब्रह्मणेवेदान्प्रहिणोतिददातितद्बुद्धौप्रकाशयतीत्यर्थः उभय

तर्हिजीवःस्यान्नेत्याह स्वराट्स्वेनैवराजतेयःतंस्वतःसिद्धज्ञानवानित्यर्थः तर्हिकिंब्रह्मा हिरण्यगर्भःसमवर्ततताग्रेभूतस्यजातःपति
रेकआसीदितिश्रुतेः नेत्याह तेनइति आदिकवयेब्रह्मणेऽपिब्रह्मवेदंयःतेनेप्रकाशितवान् योब्रह्माणंविदधातिपूर्वंयोवैवेदां
श्चप्रहिणोतितस्मै तंहदेवमात्मबुद्धिप्रकाशंमुमुक्षुर्वैशरणमहंप्रपद्यइतिश्रुतेः ननुब्रह्मणोऽन्यतोवेदाध्ययनमप्रसिद्धम् स
त्यम् तत्तुतदामनसैवतेने अनेनबुद्धिवृत्तिप्रवर्तकत्वेनगायत्र्यर्थोदर्शितः वक्ष्यतिहि प्रचोदितायेनपुरासरस्वतीवितन्वता
ऽजस्यसतींस्मृतिंहृदिस्वलक्षणाप्रादुरभूत्किलास्यतःसमेऋषीणामृषभःप्रसीदतामितिननुब्रह्मास्वयमेवस्फुरत्प्रतिबुद्ध
न्यायेनवेदमुपलभतांनेत्याहयद्यस्मिन्ब्रह्मणिसूरयोऽपिमुह्यंतीति तस्मात्ब्रह्मणोऽपिपराधीनज्ञानत्वात्स्वतःसिद्धज्ञानःपरमेश्वरएव
जगत्कारणम् ५ ५ ५ १ त्रभूतार्थेलट् तंदेवंस्वप्रकाशंआत्माकारबुद्धौप्रकाशतइति प्र

त्यबुद्धिप्रकाशंतत्वमस्यादिवाक्योत्थधीवृत्तिव्याप्तमित्यर्थः यद्वाआत्मज्ञानप्रदंहप्रसिद्धंमुमुक्षुरहंशरणंप्रपद्येतदेकशरणोभवामीत्यैति
श्चितमित्यर्थः अनेनपरापरविद्याप्रदत्वं मनसैवेति मनस्येवप्रकाशितवान् ससम्यगर्थंतृतीयामनसियथावेदस्फूर्तिस्यात्तथामनोवृत्तिं
प्रवर्तयामासेत्यर्थः गायत्र्यर्थस्तुतृतीयपादार्थः अतएवतृतीयपादस्थस्ययइत्यस्यात्रवाक्येप्रयोगः भगवताब्रह्मणोहृदिप्रथमंप्रका
शितोवेदस्तन्मुखतःप्रादुर्भूतइत्यर्थंस्पष्टयितुंद्वितीयस्कंधस्यश्लोकमाह प्रचोदितेति पुराकल्पादौअजस्यब्रह्मणोहृदिसतींसृष्टिवि
षयांस्मृतिंवितन्वताविस्तारयतायेनभगवताप्रेरितावेदवाणीतस्यास्यतोमुखतःकिलप्रादुर्भूतास्त्वानिशिक्षादियुक्तानिलक्षणानिय
स्याःसाऋषीणांज्ञानप्रदानांश्रेष्ठइतितदर्थः न्यायेनेति लोकेश्रुतिप्रसिद्धोर्थइहन्यायपदाभिधः यथापूर्वेगुराचार्याद्वेदमधीत्यस्फु

स्वापरेद्युःप्रबुद्धःगुरुनिरपेक्षएववेदंपठतितद्वद्दैनंदिनकल्पेतु महाकल्पादौतुजातिस्मरवद्. दृष्टविशेषात्कल्पांतरानुष्ठितकर्मोपासन
बललब्धब्रह्मत्वाधिकारःकल्पांतरस्थवेदंस्मरतित्यर्थः सूरयोधिकारिणोब्रह्मादयोपि मुह्यंतीति पूर्वोक्तस्मृतिपुराणबलात्ब्रह्मणः
कल्पादौवेदादिविषयेमोहोनिश्चीयते तेनस्कसप्रबुद्धन्यायस्यजातिस्मरत्वकल्पनस्यचबाधइत्यर्थः पूर्वपक्षोक्तहिरण्यगर्भश्रुतौतु
श्रुत्यंतरोक्तापरमेश्वरात्ज्ञानादिप्राप्तिरुपसंहर्तव्येतिभावः उक्तश्लोकार्थंनिगमयति अतएवेत्यादिना अतएवपरमार्थसत्यइति
गायत्र्याप्रारंभेणेति सर्वगायत्रीमंत्राव्यभिचारिधीमहीतिपदंसंवलितगायत्र्यर्थेनप्रारंभेणेत्यर्थः वक्ष्यमाणलक्षणवाक्येष्वपिइत्थ
मेवगायत्रीपदार्थोबोध्यः वेदप्रसिद्धचतुर्विंशत्यक्षरत्रिपादछंदसाप्रारंभइतित्वर्थोगायत्र्याचसमारंभइत्यादेर्नयुक्तःचतुर्लक्षपुराणग्रं
थेसपादलक्षभारतेचाष्टादशस्मृतिषुचचतुर्वेदैकगोचरनादृशात्रिपदछंदोविशेषस्यक्वाप्यदर्शनेनएकस्मिन्नेवपुराणेतत्संभवत्वापादान
स्यात्यंतासंभवोक्तित्वात्गायत्र्यर्थताचास्यश्लोकस्येत्थंसवितृपदंजगत्प्रसवकारणपरंतदर्थोजन्माद्यस्ययतइतिअनेनोच्यते पालना-

अतएवसत्यः असतः सत्ताप्रदत्वाच्चपरमार्थसत्यःसर्वज्ञत्वेनचनिरस्तकुहकः तंधीमहीतिगायत्र्याप्रारंभेणचगायत्र्याख्य
ब्रह्मविद्यारूपमेतत्पुराणमितिदर्शितम् यथोक्तंमत्स्यपुराणेपुराणदानप्रस्तावे यत्राधिकृत्यगायत्रींवर्ण्यतेधर्मविस्तरः वृत्रा-
सुरवधोपेतंतद्भागवतमिष्यते लिखित्वातच्चयोदद्याद्धेमसिंहसमन्वितम् प्रौष्ठपद्यांपौर्णमास्यांसयातिपरमंपदम् अष्टाद
शसहस्राणिपुराणंतत्प्रकीर्तितम् ७ ७ ७ ७ दिव्क्रीडार्थकदेवपदार्थोप्यनेनैव जन्मादिइत्यादि

पदेनपालनादिग्रहणात्वरेण्यपदार्थःपरपदेन परत्वोपपादकानिसत्यादिपदानिगर्भपदार्थोधामपदेनधीमहीपदंस्वरूपेणैव तृतीय-
पादार्थःतेनेब्रह्महृदेत्यादिनासमष्टिहिरण्यगर्भबुद्धिप्रेरकत्वोक्तौसर्वव्यष्टिबुद्धिप्रेरकत्वस्यार्थादुक्तिसिद्धेरितिगायत्रीमंत्रेणगायत्रीप
देनवाआख्यायते याब्रह्मविद्यासारूप्यतेप्रतिपाद्यतेयेनेतितद्रूपंप्रतिपाद्यप्रतिपादकयोरभेदविवक्षयाविद्यास्वरूपमेववाश्रीम
द्भागवतमित्यर्थः अत्रब्रह्मविद्यापदेनसगुणनिर्गुणविद्ययोर्ग्रहणं गायत्रीमंत्रेणहिशक्तिवृत्त्यासगुणब्रह्मणोलक्षण यानिर्गुणस्य
चप्रतिपादनेनतत्समानार्थकस्यास्यतदुभयार्थकत्वात् श्रीभागवतस्यगायत्र्याप्रारंभः नत्वप्रभृ तीति चास्यपुराणस्यलक्षणा-
नीत्यत्रपुराणवाक्यानिप्रमाणयति यथोक्तमित्यादिना गायत्र्यर्थमधिकृत्यारभ्यधर्मस्यधर्मः प्रोज्झितकैतवइत्युक्तलक्षणभाग
वतधर्मादेर्विस्तरोवृत्रासुरवधश्चवर्ण्यते यत्रतदष्टादशसाहस्रंपुराणंभागवतमितिमात्स्यार्थः पुराणांतरेवामनपुराणेहयग्रीवब्रह्मविद्येतिहयग्रीवे 
णाश्वशिरोयुक्तेनदधिचिमुनिनाप्रवर्तितानारायणवर्मोख्याब्रह्मविद्यावृत्रवधसाहचर्यादिनाग्राह्याइतिसंदर्भिण्यां ननुलक्षणंअ

तुलसैवदानश्रवणादिविधानंयुक्तं भगवताप्रोक्तंभागवतंभगवतइदंप्रतिपादकंभागवतंइतिसमास्यंयैवभागवतपदार्थज्ञानसंभवादित्याशंका-
यामाह अतएवेति लक्षणोक्तिपूर्वकंदानपठणादिविधानादेवेत्यर्थः अयंभावः लक्षणोक्तिंविनाभागवतंदद्यादित्येवंदानादिवि-
धानेएवंचकारभगवान्व्यासः कृपणवत्सलइतिउक्त्याभगवद्व्यासप्रणीतत्वेनपुराणमात्रस्यभागवतत्वसंभवात् श्रीविष्णुशिव
योर्द्वयोरपिभगवत्त्वेनतत्प्रतिपादकविष्णुशिवपुराणादेरपिभागवतत्वसंभवाच्चनसामंजस्येनपदार्थनिर्णयः तथाचभागव
तंनामान्यत्शिवविष्णुपुराणादिकमेवस्यात् इत्यतिव्याप्तिशंकास्यात् लक्षणोक्तौतुयथोक्तलक्षणलक्षितंश्रीशुकपरीक्षि
त्संवादरूपं द्वादशस्कंधात्मकंश्रीभागवतमितिविशेषनिर्णयेननशंकनीयं शंकितुंयोग्यंनभवति सर्वत्रलक्षणोक्तेरतिव्या-

पुराणांतरेचग्रंथोष्टादशसाहस्त्रोद्वादशस्कंधसंमितःहयग्रीवब्रह्मविद्यायत्रवृत्रवधस्तथा गायत्र्याचसमारंभस्तद्वैभागवतंविदुः ७.

प्त्यादिनिरासार्थायाःसत्वात् इत्यपिनशंकनीयंइत्यपि ब्रह्मविद्यारूपत्वोक्त्या कर्मविद्यावन्मुमुक्षुभिरसेव्यमित्यपिनशंकनीयं
इतिबोध्यते आलयमित्यादौमुक्तादिसेव्यत्वस्यवक्ष्यमाणत्वाच्चेतिसद्भिर्विभावनीयं तथाचगारुडेएतत्प्रशंसा अर्थोयंब्रह्मसू
त्राणांभारतार्थविनिर्णयः गायत्रीभाष्यभूतोसौवेदार्थपरिबृंहितः पुराणानांसामरूपःसाक्षाद्भगवतोदितः ग्रंथोष्टादशसा
हस्त्रः श्रीमद्भागवताभिधः इत्यत्रब्रह्मसूत्रार्थत्वात् ब्रह्मविद्यारूपत्वंव्यंजितं वेदेषुसामवत् पुराणेषुश्रेष्ठत्वात् सामरूपत्वंक
सौयेनविभाषितोयमित्युपसंहारात् साक्षाद्भगवदुक्तत्वं तथाचसाक्षाद्भगवताप्रोक्तंभागवतमितिनिरुक्त्यायोगरूढोयंभागव
तशब्दोनकेवलंयौगिकः ७ ७ ७ ७ ७

इतिनविष्णुराणादौभागवतत्वं ग्रथोष्टादशसाहस्त्रइति इत्यष्टादशसाहस्त्रगणनाप्रकारः दीर्घवृत्तगद्यानुष्टुप्छंदः समूहेग्रंथेद्वात्रिं
शदक्षरात्मिकानुष्टुप्परिमाणेनगणनायांपंचोनद्विशत्युत्तरषोडशसहस्त्रसंख्या १६१९५ संपद्यते उवाचमंत्राः सप्तत्यधिकद्वाद
शशतसंख्याकाः १२ ७० अर्धश्लोकाः शतद्वयसंख्या २०० इतिश्रीमद्भागवतेऽमुकस्कंधेप्रथमादिरध्यायइतिवाक्यानामपि-
श्रीमद्व्यासविरचितत्वेनग्रंथसंख्यांतर्गतत्वेनतत्संख्या ३२५ पंचविंशदुत्तरत्रिशती संकलनयाऽष्टादशसाहस्त्रसंख्या १८०००
संपत्तिः यद्वाचंडीसप्तशतीन्यायेनमंत्रविभागेनापिइयंसंख्यासंभाव्यते तथाहि अनुष्टुप्श्लोकगद्यार्यारूपमंत्राः एकादशसहस्त्रा
णिद्विसप्तत्युत्तरेद्विशतीच ११२७२ दीर्घवृत्तश्लोकानांषट्पंचाशदधिकसप्तविंशतिशतसंख्याकानामर्धकानिमंत्राः द्वादशाधिकसार्ध
पंचसहस्त्राणि ५५१२ अनुष्टुबर्धकानिएकादशाधिकद्विशती २११ उवाचमंत्राणांसप्तत्यधिकद्वादशशतसंख्यानांमध्येपंचषष्ठ्यु
त्तरद्विशतानामनुवादरूपाणांपुरोवादशेषतयातावतोविहायावशिष्टाउवाचमंत्राः पंचोत्तरसहस्त्रं १००५ संकलनयाष्टादशसहस्त्रा
णि १८००० आपाततएवंव्याख्या तेनतत्तदध्यायेषु तत्तन्मंत्रगणनयासंख्योनाधिक्यसंकलनमूह्यंहेमाद्रिप्रभृति
धर्मशास्त्रग्रंथेषुकालखंडादौकलिंसभाजयंत्यार्याइत्यादिश्रीभागवतवचनोदाहरणेनकलिधर्मादिनिर्णयात् कर्मकांडार्थोप्यत्रोक्तं

पद्मपुराणे अंबरीषंप्रतिगौतमोक्तिः अंबरीषशुकप्रोक्तंनित्यंभागवतंशृणु पठस्वस्वमुखे
नापि यदीच्छसिभवक्षयमिति अतएवेदंभागवतमन्यवदित्यपिनशंकनीयम् १ ७

इत्ययरूपत्वेनसकलवेदादिसाररूपत्वं सर्ववेदेतिहासानां सारंसारंसमुद्धृतमिति वक्ष्यमाणत्वाच्च किंचमुमुक्षूपकारायहेमाद्रि
प्रेरितेन बोपदेवेनकृतेमुक्ताफलग्रंथेपुराणांतरंविहायश्रीभागवतश्लोकानामेवोदाहरणात् श्रीभागवतस्यैवमोक्षैकफलकत्वेनमुमु
क्षुभिरवश्यसेव्यत्वंव्यज्यते तथाचग्रंथांतेतत्पद्यं विद्वद्धनेशशिष्येणभिषक्केशवसूनुना हेमाद्रिर्बोपदेवेनमुक्ताफलमचीकरत्इ
ति अतएवस्वाम्युदाहृते अंबरीषशुकप्रोक्तंनित्यंभागवतंशृणु इतिवाक्ये यदीच्छसिभवक्षयमित्युक्तं अत्रशुकप्रोक्तमितिविशे
षणेनविष्णुपुराणादीनांयोगवृत्त्याभागवतत्वनिरासः किंचयोगवृत्त्यापुराणांतरस्यापिभागवतत्वेहेमाद्रिमाधवादिभिः मधुसूदन
स्वामिकमलाकरभट्टानंतदेवपर्यंतैर्महानिबंधकारैर्निरूपपदंभागवतपदंउच्चार्यैतस्यैवपुराणस्यवचांसिनोदाह्रियेरन् किंत्व
न्यभागवतव्यावर्तकविशेषणमुपादीयेत् भागवतइत्युक्त्वा अन्यपुराणवाक्यमपिउदाह्रियेत नचैवंक्वाप्युपलभ्यते तस्मात्इदमेव ३६

भागवतं नविष्णुपुराणादियत्तु शारीरकमीमांसायांभागवतमत निरसनं तद्धयग्रीवपंचरात्रेणगणितनंत्रभागवताख्यतंत्रमेतस्यैवेतित
त्रैवस्पष्टं वासनाभाष्यसंबंधोक्तिविद्वत्कामधेनुहत्तुमच्छ्राध्यनत्वभावार्थदीपिकापरमहंसप्रियाशुकहार्दमनोहरातोषणीसंदर्भिण्या
दयष्टीकाग्रंथाः विल्वकृत्वाचार्यगौडाचार्यवल्लभाचार्यविजयध्वजाचार्यादिभिः कृताबहुतराविराजंते तथापिश्रीधरस्वामिकृतटीका
याभगवत्प्रियत्वेनसर्वसंमतत्वात् सर्वदेशेप्रसिद्धत्वाच्च तामेवव्याख्यातुमुद्यतामहे एवंनिराकारब्रह्मपरतयाव्याख्यातंपद्यंसाकारश्री
कृष्णपरब्रह्मतयापिव्याख्यायते कृष्णलीलायाअत्रप्राधान्येनप्रतिपादनात् ग्रंथप्रतिपाद्यस्यच ग्रंथाद्येपद्येवर्णनावश्यकत्वात् तत्रपरंपू
र्णावतारतयांशावतारेभ्यः उत्कृष्टंश्रीकृष्णंधीमहीत्यन्वयः अस्यस्वरूपलक्षणमाह धाम्नास्वेनेति आत्मीयेनमथुराख्येनधाम्नास्थानेन
तन्निवासिनांसदानिरस्तकुहकं मायाकार्यसंसारलक्षणंयेनतं लीलामाह जन्माद्यस्येति आद्यस्यजन्मादिविकाररहितस्यापिजन्मअथवा
रः यतः यत्रवसुदेवगृहेसम्यगभ्यर्थेतनसिद्धस्तस्मात् इतरतश्चइतरत्रनंदगृहेपियोन्वयात् अन्वगच्छदिति परेणैवयइतिपदेनअन्वयः
कस्माद्धेतोरन्वगात्तत्राह अर्थेषुकंसवंचनादिप्रयोजनेषु अभिज्ञइति यद्वाबाललीलारासलीलादिलोकोत्तरविलासरूपेष्वर्थेषु अभिज्ञ
स्तादृशार्थसंपादननिपुणइत्यर्थः ततःस्वराट् स्वैर्गोकुलवासिगोपालादिभिरेवराजतइति गोपलीलस्याप्याहतेश्वर्यमाह तेनेइतियोब्रह्म
णेब्रह्मणेविस्मापयितुंहृदासंकल्पमात्रेणब्रह्मसत्यज्ञानानंतानंदमात्रैकरसमूर्तिमयंवत्सवत्सपालादिरूपंवैभवंविस्तारितवान् यत्र
सूरयोबलरामचतुर्मुखादयोमुह्यंतितत्वंज्ञातुंनशक्नुवंतियद्वायत्लौकिकालौकिकतादृशलीलाभिः सूरयोलीलातत्वज्ञाः भक्ताःमुह्यंति
प्रेमातिशयोदये नविवशाभवंतियद्दिव्यनरत्वाप्यन्वेषीति यत्तयोर्लीलाभ्यस्तेजोवारिमृदांयथायथावत्विनिमयोभवति ननु
त्वादिकांत्याचंद्रादेर्निस्तेजस्त्वंतन्निकटवस्तूनांततेजसाचंद्राधिकतेजोवत्वं वेणुवादनादिर्ललयावारिणः कठिनत्वंमृदःपाषाणादे
र्द्रवत्वंइति यत्रश्रीकृष्णोनिमित्तेसतित्रिसर्गः त्रिषुगोकुलमथुराद्वारवतिपुरेषुसर्गः गोपालराधिकादेरक्रूरोद्धवादेः रुक्मिण्यादेश्च
प्रादुर्भावः अमृषासत्यः तेषांगोलोकवैकुंठादिवासित्वेनतादृग्ग्रहणांभगवदवतारतुल्यत्वादिति १ ६७ ६७

इतिश्रीमद्भागवतप्रथमश्लोकस्यश्रीधरीयटीकायाः काशीनाथोपाध्यायकृताव्याख्यासमाप्ता हेंपुस्तकमुंबईंतरू

ग्णाशास्त्रीगुर्जरयांचेग्रंथप्रकाशकछापखान्यांतछापिलें शके१७८४ फाल्गुनशु०१ गुरुवार


॥ इतिश्रीवेदस्तुतेः श्रीधरीयटीकायाःसुबोधिनी ॥
॥ व्याख्यासमाप्ता ॥